# विषय-सूची

# ईश-वन्दना

ओंकारं बिन्दुसंयुक्तं
नित्यं ध्यायन्ति योगिनः ।
कामदं मोक्षदं चैव
ओंकाराय नमो नमः ॥

**शब्दार्थ :—**

ओंकारम्=ओं को, बिन्दुसंयुक्तम्=बिन्दु से शोभायमान, कामदम्=इच्छा पूर्ण करने वाले, मोक्षदम्=मुक्ति देने वाले को, योगिनः=योगी लोग, नित्यम्=हमेशा, ध्यायन्ति=ध्यान करते हैं, ओंकाराय=ओं के लिए, नमो नमः=बार बार नमस्कार है ।

**सरलार्थ :—**

योगी लोग बिन्दु से शोभायमान (जिस) ओ३म् का नित्य ध्यान करते हैं, इच्छाओं को पूरी करने वाले और कल्याण करने वाले (उस) ओं को बार बार नमस्कार है ।

प्रथमः पाठः

# कर्त्ता क्रिया च (१)

एषः रामः अस्ति,

रामः चलति ।

एषः मृगः अस्ति,

मृगः धावति ।

एषः भ्रमरः अस्ति,

भ्रमरः गुंजति ।

एतौ वृक्षौ स्तः,

वृक्षौ फलतः

एतौ कपोतौ स्तः,
कपोतौ कूजतः ।

एतौ वानरौ स्तः,
वानरौ कूर्दतः ।

एते छागाः सन्ति,
छागाः चरन्ति ।

एते मेघाः सन्ति,
मेघाः गर्जन्ति ।

एते घन्टाः सन्ति,
घन्टाः नदन्ति ।

संस्कृत के ज्ञान के लिए यह जान लेना आवश्यक है कि अन्य भाषाओं की तरह संस्कृत वाक्यों में भी दो शब्द प्रधान होते हैं, इनमें से एक शब्द को **'कर्त्ता'** और दूसरे शब्द को **'क्रिया'** कहते हैं ।

| शब्द | धातुएं |
|---|---|
| रामः (संज्ञा), सिंहः=शेर, मृगः=हिरण, भ्रमरः=भौंरा, वृक्षः=पेड़, कपोतः=कबूतर, वानरः= बन्दर, छागः=बकरा, मेघः बादल, घण्टः (संज्ञा) | चल्=चलना, धाव्=दौड़ना, फल्=फलना, नद्=बजना। कूज्=पक्षियों का बोलना, गुंज्=गूंजना, कूर्द्=कूदना, चर्=चलना, गर्ज्=गर्जना, |

## अभ्यासः

१. संस्कृत में अनुवाद करो–

घण्टा बजता है। मृग दौड़ता है। बकरा चलता है। वृक्ष फल देता है। बन्दर कूदते हैं। कबूतर बोलते हैं। भौंरे गूजते हैं। हिरण दौड़ते हैं। दो बादल गर्जते हैं। दो बकरे दौड़ते हैं। दो मृग कूदते हैं।

२. रिक्त स्थानों की पूर्ति करो–

घण्टौ········। मृगौ········। चरतः········। गर्जतः······।
वृक्षः ········। वानरः······। कूजतः········। धावतः······।
भ्रमराः······। मृगाः········। चलन्ति········। कूजन्ति······।

द्वितीयः पाठः

# कर्त्ता क्रिया च (२)

एषा महिला अस्ति,
महिला मन्थति ।
एते कन्ये स्तः,
कन्ये कूर्दतः ।

एताः ललनाः सन्ति,
ललनाः पचन्ति ।

एषा मत्स्या अस्ति,
मत्स्या तरति ।

एते अजे स्तः,
अजे पिबतः ।

एताः **मूषिकाः** सन्ति,
मूषिकाः **खादन्ति** ।

एषा **गोधा** अस्ति,
गोधा **सरति** ।

एते **सारिके** स्तः,
सारिके **भणतः** ।

एता **तित्तलिकाः** सन्ति,
तित्तलिकाः **शोभन्ते** ।

पहले पाठ में 'कर्ता' में पुल्लिग संज्ञाओं का प्रयोग हुआ था; इस पाठ में 'कर्ता' में स्त्रीलिंग की संज्ञाएँ हैं। कर्ता में लिंग परिवर्तन का प्रभाव क्रिया पर बिल्कुल नहीं पड़ता ।

**शब्द** **धातुएं**

महिला=स्त्री, कन्या=लड़की, मन्थ्=मथना, पच्=पकाना,
ललना=स्त्री, मत्स्या=मछली, तर्=तैरना. पिब्=पीना,
अजा=बकरी, मूषिका= खाद्=खाना, सर्=सरकना,

चुहिया, गोधा=छिपकली, भण्=बोलना ।
सारिका=मैना, तित्तलिका
=तितली ।

## अभ्यासः

१. संस्कृत में अनुवाद करो–

मैना बोलती है । सीता खाती है । कन्या पकाती है । दो महिलाएं पीती है । ललनाएं हँसती हैं । महिलाएं मथ रहीं हैं । मछलियां तैरती हैं । छिपकलियां सरकती हैं । तितलियां शोभा पाती हैं ।

२. रिक्त स्थानों की पूर्ति करो—

······कूर्दन्ति । ······पचति ।······मन्थतः । मत्स्याः·········। कन्या······ । अजाः·········भणन्ति ।·········सरतः ।ललने······ ।

३. निम्नलिखित शब्दों का अर्थ बताओ–

सिंहः । भ्रमरः । वानरौ । घण्टाः । ललनाः । कन्याः ।

४. निम्नलिखित शब्दों में अन्तर बताओ ।

छागः–अजा । कपोतः–सारिका । गोधा–गोधे । अजा–अजाः । तरति–तरन्ति । कूर्दति–कूर्दन्ति ।

तृतीयः पाठः

# कर्त्ता क्रिया च (३)

एतत् पर्णम् अस्ति,
पर्णम् पतति ।

एतत् जलम् अस्ति,
जलम् वहति ।

एतत् मित्रम् अस्ति,
मित्रम् मिलति ।

एते फले स्तः,
फले पततः ।

एते पुष्पे स्तः,
पुष्पे विकसतः ।

एते नयने स्तः,
नयने पश्यतः ।

एतानि रत्नानि सन्ति,
रत्नानि भासन्ते ।

एतानि पुस्तकानि सन्ति,
पुस्तकानि वर्तन्ते ।

एतानि शस्त्राणि सन्ति,
शस्त्राणि शोभन्ते ।

इस पाठ में कर्ता के लिए के नपुंसकलिंग संज्ञा का प्रयोग हुआ है । क्रिया पर नपुंसकलिंग का भी कोई प्रभाव नहीं । क्रिया तो तीनों लिंगों में समान रहती है ।

## आत्मनेपदी धातु के रूप—

भासते भासेते भासन्ते ।
शोभते शोभेते शोभन्ते ।
वर्तते वर्तेते वर्तन्ते ।

नए शब्द—पर्णम्=पत्ता, जलम्=पानी, मित्रम्=मित्र, फलम्=फल, पुष्पम्=फूल, गृहम्=घर, नयनम्=आँख । रत्नम्=हीरे । पुस्तकम्=पुस्तक ।

नई धातुएं—पत्=गिरना, वह्=बहना, मिल्=मिलना, विकस्=खिलना, स्था (तिष्ठ)=ठहरना, दृश् (पश्य)=देखना, भास्=चमकना, शोभ्=शोभा पाना, वृत्=होना ।

### अभ्यासः

१. संस्कृत में अनुवाद करो—

दो नयन देखते हैं। दो नयन खिलते हैं। दो फूल गिरते हैं। एक फूल खिलता है। दो घर शोभा पाते हैं। पत्ते गिरते हैं। जल बहता है। जल गिरता है। मित्र मिलते हैं। पुस्तकें शोभा पाती हैं। रत्न हैं।

२. रिक्त स्थानों की पूर्ति करो—

.........विकसन्ति । नयनानि.........। .........तिष्ठन्ति ।
.........वर्तेते । मित्रे.........। शस्त्रम्.........। भासेते ।

३. निम्नलिखित शब्दों में अन्तर बताओ :—

नक्षत्रम्—नक्षत्रे । रत्नम्—रत्नानि । पुस्तकम्—पुस्तकानि ।
शोभेते—शोभते । वर्तते—वर्तेते ।

चतुर्थः पाठः

# कर्त्ता क्रिया च (४)

(कर्तरि इकारान्ताः उकारान्ताः शब्दाः)

एषः अग्निः अस्ति,
अग्नि भासते।
एष मुनिः अस्ति,
मुनिः यजते।
एषः ऋषिः अस्ति,
ऋषिः गायति।

एतौ साधू स्तः,
साधू तिष्ठतः।
एतौ पशू स्तः,
पशू चरतः।
एतौ तरू स्तः,
तरू शोभेते।

एतौ मणी स्तः, मणी शोभेते। एते अलयःसन्ति, अलयः गुंजन्ति। एषः भानुः अस्ति, भानुः दीव्यति। एते गुरवः सन्ति, गुरवः पठन्ति।

नए शब्द–

अग्निः=आग, मुनिः (संज्ञा),ऋषिः=मंत्र बनाने वाले मणिः=रत्न, अलिः=भौंरा, साधुः=फकीर, पशुः,=जानवर तरुः=वृक्ष, भानुः=सूर्य, गुरुः=पढ़ाने वाला ।

### नई धातुएं

गै (गाय्) =गाना, यज्=यज्ञ करना, दिव्=चमकना ।

### अभ्यासः

१. संस्कृत में अनुवाद करो–

अग्नियां चमकती हैं। बन्दर कूदता है। दो कवि गाते हैं। मुनि यज्ञ करते हैं। दो भौंरे गूँजते हैं। दो साधु चलते हैं। पशु खाते हैं। दो बच्चे कूदते हैं। गुरु पढ़ता है। तरु झुकता है।

२. निम्नलिखित वाक्यों को शुद्ध करो–

मणयः शोभते। अग्नी भासन्ते। साधुः याचेते। मुनयः यजते। गुरू नमन्ति। तरवः तिष्ठति।

(नोट–तीन वाक्यों में क्रिया शुद्ध करो और तीन वाक्यों में कर्ता शुद्ध करो)

३. रिक्त स्थानों की पूर्ति करो–

अग्नी.........। मणिः .........। कपी......___। .........गायन्ति। .........गुंजतः.........चरति।.........नमति। .........तिष्ठन्ति। शिशुः......___।

पंचमः पाठः

# कर्त्ता क्रिया च (५)

(कर्तरि इकारांताः ईकारांताः उकारांताः ऊकारांताः शब्दाः)

एषा तरणिः अस्ति,
तरणिः तरति ।
एषा नगरी अस्ति,
नगरी राजते ।
एषा नदी अस्ति,
नदी वहति ।
एषा धेनुः अस्ति,
धेनुः दुहति ।
एषा वधू अस्ति,
वधू मन्थति ।
एषा चमू अस्ति,
चमू चलति ।

एते विपणी स्तः,
विपणी शोभेते ।
एते नार्यौ स्तः,
नार्यौ हसतः ।

एते **नट्यौ** स्तः,
नट्यौ **क्रीड़तः** ।
एते **रज्जू** स्तः
रज्जू **वर्तेते** ।
एते **वध्वौ** स्तः,
वध्वौ **चलतः** ।

एताः **महिष्यः** सन्ति,
महिष्यः **धावन्ति** ।
एताः **पुत्र्यः** सन्ति,
पुत्र्यः **पश्यन्ति** ।
एताः **भगिन्यः** सन्ति,
भगिन्यः **वदन्ति** ।

एषा सुभ्रूः अस्ति, सुभ्रूः हसति । एषा श्रीः अस्ति । श्रीः राजते । एते भ्रुवौ स्तः, भ्रुवौ शोभेते । एताः स्त्रियः सन्ति, स्त्रियः चलन्ति ।

**नए शब्द**

तरणिः=नौका । विपणिः=दुकान । नगरी=शहर । । नटी=नाचने वाली । नारी=स्त्री । महिषी

**नई धातुएं**

मन्थ्=मथना । राज् अच्छा लगना ।

=भैंस । पुत्री=बेटी । भगिनी =बहिन । धेनुः=गाय । वधू=बहू । चमू=सेना ।
सुभ्रूः=सुन्दर भोहों वाली स्त्री ।
श्रीः=लक्ष्मी ।

### अभ्यासः

१. संस्कृत में अनुवाद करो–

सेना अच्छी लगती है। लक्ष्मियां शोभा पाती हैं। बहिन दौड़ती है। पुत्री बिलोड़ती है। नटी खेलती है। दो नदियां बहती हैं। दो लड़कियां चलती हैं। भैंस भागती हैं। बहुएं बिलोड़ती हैं। सेनाएं भागती हैं।

२. हिन्दी में अनुवाद करो–

नगर्यः रोचन्ते। नद्यौ एधेते। भगिन्यः पठन्ति। पुत्री धावति। वध्वौ मन्थतः। चमू चलति। महिष्यौ पिबतः। श्रियः शोभन्ते। स्त्रियः क्रीडन्ति पठन्ति च।

३. शुद्ध करो–

नगरी राजन्ते। श्रेणी शोभेते। नद्यः रोचते। पुत्री क्रीडन्ति। चम्वौ चलन्ति। महिषी धावतः।

(तीन वाक्यों में कर्त्ता तथा तीन वाक्यों में क्रिया शुद्ध करो)

४. रिक्त स्थानों की पूर्ति करो–

तरणी·········। धेनू·········। वध्वौ·········। चम्वः······।
······हसन्ति। ······क्रीडन्ति। ······वर्तन्ते। ······धावति।
······वदति।

षष्ठः पाठः

# कर्त्ता क्रिया च (६)

(कर्तरि नपुंसकलिंगे इकारान्ताः उकारान्ताः शब्दाः)

एतत् वारि स्यन्दति ।
एते वारिणी स्यन्दतः ।
एतानि वारीणि स्यन्दन्ति ।

एतत् मधु च्यवति ।
एते मधुनी च्यवतः ।
एतानि मधूनि च्यवन्ति ।

एतत् वस्तु शोभते ।
एते वस्तुनी शोभेते ।
एतानि वस्तूनि शोभन्ते ।

अम्बु वहति, अम्बुनी स्यन्दतः, अम्बूनि पतन्ति ।
अश्रु पतति, अश्रुणी पततः, अश्रूणि पतन्ति ।

क्रमागत नपुंसकलिंग के इकारान्त तथा उकारान्त शब्दों का प्रयोग ऊपर दिया है।

नपुंसकलिंग में ईकारान्त तथा ऊकारान्त शब्दों का प्रयोग बहुत कम होता है।

अतः उनका प्रयोग नहीं दिया है।

**नए शब्द**

वारि=पानी, मधु=शहद, वस्तु=सामान, अम्बु=पानी, अश्रु=आँसू।

**नई धातुएं**

स्यन्द्=बहना, च्यव्=टपकना।

## अभ्यासः

१. संस्कृत में अनुवाद करो–

शहद टपकते हैं। दो पानी बहते हैं। वस्तुएं शोभित होती हैं। पानी टपकता है।

२. हिन्दी में अनुवाद करो–

वस्तूनि शोभन्ते। वारि च्यवति। अम्बुनी वर्तेते। मधुनी पततः।

३. इन शब्दों में अन्तर बताओ–

वस्तुनी–वस्तूनि। मधुनी–मधूनि। वारिणी–वारीणि।

४. इन धातुओं के रूप लिखो–

नद्, गुंज्, कूज्, सृ (सर्), तृ, (तर्), भण्, वह्, और मन्थ्।

सप्तमः पाठः

# कर्त्ता क्रिया च (७)

(त्रिषु कर्तृषु ऋकारान्ताः शब्दाः)

(पुंल्लिगशब्दाः)

एषः पिता अस्ति,
पिता तिष्ठति ।

एषः नेता अस्ति,
नेता भाषते ।

एतौ धातारौ स्तः,
धातारौ सृजतः ।

एतौ भ्रातरौ स्तः,
भ्रातरौ खादतः ।

एते गन्तारः सन्ति,
गन्तारः पश्यन्ति ।

एते द्वेष्टारः सन्ति,
द्वेष्टारः क्रुध्यन्ति ।

(स्त्रीलिंगशब्दाः)

एषा माता अस्ति,
माता पचति ।

एषा स्वसा अस्ति,

स्वसा पठति ।

एते दुहितरौ स्तः,

दुहितरौ खेलतः ।

एते ननान्दरौ स्तः,

ननान्दरौ कथयतः ।

एताः मातरः सन्ति,

मातरः गच्छन्ति ।

एताः ननान्दरः सन्ति,

ननान्दरः विवदन्ति ।

(नपुंसकलिंगशब्दाः)

एतत् दातृ अस्ति,

दातृ ददति ।

एते धातृणी स्तः,

धातृणी सृजतः ।

एतानि कर्तॄणि सन्ति,

कर्तॄणि रचयन्ति ।

**नए शब्द** **नई धातुएं**

पितृ=पिता, नेतृ=नेता, भाष्=बोलना, सृज्=बनाना,
धातृ=ईश्वर, गन्तृ=जाने क्रुध्=क्रोध करना, कथ्=

वाला, द्वेष्टृ=द्वेष करने
वाला, मातृ=माँ, स्वसृ=
बहिन, दुहितृ=लड़की,
ननान्दृ=ननद, दातृ=दान
दान देने वाला, कर्तृ=काम
करने वाला।

कहना, दा=दान देना, रच्
बनाना।

## अभ्यासः

१. संस्कृत में अनुवाद करो–

मनुष्य दौड़ते हैं। दो भाई जाते हैं। सब नेता बोलते हैं। बहिनें पढ़ती हैं। माँ पकाती हैं। ईश्वर बनाता है। दानी देते हैं।

२. हिन्दी में अनुवाद करो–

नरौ खादतः। भ्रातरः क्रीड़न्ति। नेता गच्छति। स्वसारः स्मरन्ति। भ्रातरः पठन्ति। धाता ददाति। दुहितरौ पचतः।

३. निम्नलिखित वाक्यों को शुद्ध करो–

पिता कथयतः। मातरौ खादन्ति। स्वसा पचतः। भ्रातरः स्मरतः। दाता ददन्ति। दुहितरौ क्रुध्यन्ति।

४. निम्नलिखित शब्दों में अन्तर बताओ–

दातृणी–दातृणि। धातारौ–पितरौ। दुहितरौ–स्वसारौ।

५. निम्नलिखित शब्दों को वाक्यों में प्रयुक्त करों–

ना। नेतारौ। धातारः। दुहिता। स्वसारः। माता।

अष्टमः पाठः

# कर्त्ता क्रिया च (८)

## (कर्तरि मध्यमपुरुषप्रयोगः)

त्वं धावसि । त्वं कूर्दसि ।
त्वं भ्रमसि । त्वं भणसि ।
त्वं कर्षसि । त्वं सृजसि ।
त्वं गुंजसि । त्वं तरसि ।

त्वं भाससे । त्वं शोभसे ।
त्वं वर्तसे । त्वं याचसे ।
त्वं सेवसे । त्वं लभसे ।

युवां भणथः । युवां कर्षथः ।
युवां मन्थथः । युवां स्पन्दथः ।
युवां च्यवथः । युवां पतथः ।
युवां सृजथः । युवां तरथः ।

युवां भासेथे । युवां शोभेथे ।
युवां वर्तेथे । युवां याचेथे ।
युवां सेवेथे । युवां लभेथे ।

यूयं भ्रमथ । यूयं कूर्दथ ।
यूयं धावथ । यूयं कर्षथ ।
यूयं गुंजथ । यूयं मन्यथ ।
यूयं च्यवथ । यूयं पतथ ।

यूयं भासध्वे । यूयं शोभध्वे ।
यूयं वर्तध्वे । यूयं याचध्वे ।
यूयं सेवध्वे । यूयं लभध्वे ।

कर्त्ता में तीन पुरुष होते हैं; प्रथम पुरुष, मध्यम पुरुष और उत्तम पुरुष । प्रथम पुरुष में संज्ञा और सर्वनाम का प्रयोग होता है, जैसे कि पिछले सात पाठों में पढ़ आये हैं; परन्तु मध्यम पुरुष तथा उत्तम पुरुष में **केवल सर्वनाम** का प्रयोग होता है और उनमें लिंग, भेद भी नहीं होता ।

(**नोट**—मध्यम पुरुष के द्विवचन में '**थः**' और बहुवचन में '**थ**' का प्रयोग होता है । पहले में विसर्ग है, दूसरे में नहीं ।)

## अभ्यासः

१. निम्नलिखित वाक्यों को शुद्ध करो–

युवाम् भासध्वे । त्वं वर्तेथे । यूयं लभसे । त्वं गच्छथ । युवां भ्रमसि । यूयं स्मरथः ।

(तीन वाक्यों में कर्त्ता और तीन वाक्यों में क्रिया शुद्ध करो)

२. संस्कृत बनाओ–

तू दौड़ता है । तुम दो बोलते हो । तुम सब माँगते हो । तुम सब तैरते हो । तुम दो सेवा करते हो । तू शोभा पाता है ।

३. रिक्त स्थानों की पूर्ति करो–

(१) ............वर्तसे । (४) त्वम्............ ।
(२) ............सेवध्वे । (५) युवाम्............ ।
(३) ............क्रीडथ । (६) यूयम्............ ।

नवमः पाठः

# कर्त्ता क्रिया च [६]

(कर्तरि उत्तमपुरुष-प्रयोगः)

अहं चलामि । अहं तरामि ।
अहं पठामि । अहं पिबामि ।
अहं हसामि । अहं गच्छामि ।
अहं धावामि । अहं भ्रमामि ।

अहं वर्ते । अहं एधे ।
अहं लभे । अहं राजे ।
अहं यजे । अहं भाषे ।

आवां चलावः । आवां पठावः ।
आवां पिबावः । आवां गच्छावः ।
आवां हसावः । आवांभ्रमावः ।
आवां पतावः । आवां कर्षावः ।

आवां वर्तावहे । आवां सेवावहे ।
आवां लभावहे । आवां एधावहे ।
आवां यजावहे । आवां भाषावहे ।

वयं स्मरामः । वयं मिलामः ।
वयं पठामः । वयं कूर्दामः ।
वयं तरामः । वयं पिबामः ।
वयं सृजामः । वयं गुंजामः ।

वयं वर्तामहे । वयं सेवामहे ।
वयं लभामहे । वयं वर्धामहे ।
वयं यजामहे । वयं भाषामहे ।

मध्यम पुरुष की तरह उत्तम पुरुष में भी केवल सर्व-नाम का प्रयोग होता है । इन दोनों में संज्ञा का प्रयोग बिल्कुल नहीं होता । मध्यम पुरुष एवं उत्तम पुरुषों के सर्वनामों में लिंग-भेद भी नहीं होता ।

### अभ्यासः

१. निम्नलिखित वाक्यों को शुद्ध करो—
अहं भाषामहे । आवाम् चलामि । वयम् हसावः । वयं याचे । आवाम् पिबावः । अहम् हसामः ।

२. संस्कृत में अनुवाद करो—
मैं माँगता हूँ । हम सब पढ़ते हैं । हम दो घूमते हैं । हम सब बोलते हैं । हम दो चलते हैं । मैं शोभा पाता हूँ ।

दशमः पाठः

# सत्यवादी हरिश्चन्द्रः

(कर्मकारकम्, लङ्लकारः, अकारान्त–आकारान्तशब्दाः)

पुरा नृपः हरिश्चन्द्रः अयोध्यां अपालयत् । तत्र विविध-प्रकारेण स प्रजाः अतोषयत् । एकदा ऋषिः विश्वामित्रः अयोध्यां अगच्छत् । तत्र च हरिश्चन्द्रं तस्य भार्यां शैव्यां च अमिलन् । तस्य सत्यभाषणस्य प्रतिज्ञां श्रुत्वा तं परीक्षितुं ऐच्छत् । दानाय तं सर्वं राज्यं अयाचत । स च धर्मं मत्वा विश्वामित्राय सर्वं राज्यं अयच्छत् । विश्वामित्रः पुनः नृपं दत्तस्य राज्यस्य दक्षिणां अयाचत । तदा हरिश्चन्द्रः वाराणसीं अगच्छत् । तत्र च स्वं चाण्डालस्य हस्ते शैव्यां च ब्राह्मणस्य हस्ते विक्रीय विश्वामित्राय यथा-भीष्टां दक्षिणां अयच्छत् ।

ततः एकदा स्वमात्रा सह उपवनं गच्छन् रोहिताश्वः सर्पदंशेन अम्रियत । शैव्या च तं भृशं अशोचत्, मृत पुत्रं च आदाय श्मशानं अगच्छत् । तत्र श्मशाने चाण्डालस्य रक्षकः हरिश्चन्द्रः "अयं ममैव पुत्रः" इति ज्ञात्वा अपि स्वभार्यां शैव्यां कररूपेण शवपटं अयाचत । यावत् शैव्या स्वशाटिकायाः अर्धार्धं वस्त्रं स्वपत्ये ददाति तावदेव भगवान्

विष्णुः हरिश्चन्द्राय दर्शनं दत्वा तं तस्य भार्यां च पुत्र-जीवनप्रदानेन अतोषयत् । सः शैव्या च बारं बारं भगवन्तं अच्युतं अनमत् । विश्वामित्रः तं भूपं सत्यवादिपदेन अभूषयत् । हरिश्चन्द्रः पुनः राज्यं अलभत, नगरं प्रजाः च चिरकालं शत्रुभ्यः अरक्षत्, धनैः अतोषयत् धर्मेण च अपालयत् इति ।

कर्त्ता के ज्ञान के बाद कर्म कारक अथवा द्वितीया-विभक्ति का प्रयोग जानना आवश्यक है । अतः कर्म-कारक के लिये पुंल्लिग तथा नपुंसकलिंग के अकारान्त शब्द तथा स्त्रीलिंग के आकारान्त शब्द इस पाठ में दिये हैं ।

**नए शब्द—**

पुरा=पहले, नृपः=राजा, भार्या=पत्नी, सर्व=सब, पुरम्=नगर, गृहम्=घर, उपवनम्=बगीचा, चाण्डालः=शूद्र, शाटिका=धोती, शवपटः=कफ़न, अच्युतः=विष्णु ।

**नई धातुएं—**

पाल्=पालना, परीक्ष्=परीक्षा करना, भूष्=सजाना, दा-यच्छ=देना, शुच्=रोना या शोक करना, स्मर्=याद करना, तुष्=प्रसन्न होना या प्रसन्न करना ।

## अभ्यासः

१. संस्कृत में अनुवाद करो–

राम वन जाता है। सीता वन को गई थी। मैं धन माँगता हूँ। कमला घर देखती थी। तू प्रजा का पालन करता है। तू शोक करती है। उसने भार्या को देखा। राजा प्रजा का पालन करता था। तूने विष्णु को नमस्कार किया।

२. हिन्दी मे अनुवाद करो–

रामः लक्ष्मणं अपश्यत्। नृपः प्रजां अपालयत्। स प्रजाः अरक्षत्। रमा धनानि अयाचत। कन्ये गृहं अपश्यताम्। युवां श्मशानं अपश्यतम्। आवां नगरं अपश्याव। वयं वनं अगच्छाम।

३. इन क्रियाओं में अन्तर बताओ– .

अरक्षत्=अरक्षत। अगच्छताम्=अगच्छतम्। अरक्षम्=अरक्षाम। अपश्यत्=अपश्यत। अमिलताम्=अमिलतम्। अतिष्ठम् अतिष्ठाम।

४. इन शब्दों के रूप कर्त्ता और कर्म में सुनाओ–

पुत्र, पुर, नगर, अच्युत, प्रजा, भार्या, अयोध्या, गृह और उपवन।

## एकादशः पाठः

# लंकादहनम्

(कर्मकारकम्, लंगलकारः इकारान्त—ईकारान्तशब्दाः)

कपीश्वरः हनुमान् रामस्य आज्ञया लंकापुरीं अगच्छत्। तत्र च विभीषणस्य मतिं अनुसरन् कपीश्वरः अशोकवाटिकायां अभ्रमत्। तत्र जानकीं तां परितः निशाचरीः च अपश्यत्। भगवतः रामस्य अंगुलीयकदानेन स्वपरिचयं सीतायै अयच्छत्। सीतायाः आज्ञया कपीश्वरः तरुन् अकृन्तत् अटवीम् च अमन्थत्। स जनकनन्दिनीं अभणत्—"हे मातः! रावणं द्रष्टुं इच्छामि।" सीतायाः कथनेन सः कपीश्वरः स्वतन्त्रतया वनीं अदहत्, रक्षकान् अमारयत् फलानि च अस्वदत।

रावणः कपीश्वरस्य समाचारेण स्वपुत्रं मेघनादं तस्य

वधाय अकथयत् "हे पुत्र ! त्वं **कपिं** मारय, **निशाचरीः** च रक्ष ।"

सः मेघनादः **कपिं** दृष्ट्वा अत्रस्यत् । युद्धकाले कपीश्वरः **दाशरथिं** मनसि अनमत् । मेघनादः मातरं **मन्दोदरीं** अस्मरत् । सः मेघनादः ब्रह्मबन्धनेन **कपिं** वशीकृत्य रावणस्य समीपे अनयत् । रावणः कपीश्वरस्य लांगूलं अज्वालयत् । **दाशरथिं** स्मरन् हनुमान् **लंकापुरीं** अदहत् **राक्षसीः** अत्रासयत्; **जानकीम्** च अतोषयत्, पुनरागत्य रामं लक्ष्मणं च लंकादहनस्य समाचारान् अभणत् । एवं सः सेवया **दाशरथिं सौमित्रिं** च प्रासादयत् ।

कर्म कारक (द्वितीया विभक्ति) में अकारान्त तथा आकारान्त शब्दों के बाद इकारान्त (पुल्लिग, स्त्रीलिंग तथा नपुंसकलिंग) और इकारान्त (केवल स्त्रीलिंग) शब्दों का प्रयोग इस पाठ में दिया है ।

| नए शब्द– | नई धातुएं |
|---|---|
| मतिः=बुद्धि, अटवी=बगीचा, | भ्रम्=घूमना, कृन्त्=काटना, |
| अंगुलीयकम्=अंगूठी, कपिः= | मन्थ्=मथना, भण्=बोलना, |
| बन्दर, लांगूलम्=पूँछ, | इच्छ्=चाहना, दह्=जलना, |

दाशरथिः—राम, निशाचरी—राक्षसी, सौमित्रिः—लक्ष्मण, कपीश्वरः—हनुमान् ।

तप्—गर्म होना या क्रोध करना
स्वद्—स्वाद लेना ।

## अभ्यासः

१. संस्कृत में अनुवाद करो—

वानर नगरी को गया । जानकी ने उसे कहा । राम ने वानरों को देखा । वानरों ने कथा सुनी । रावण ने मृत्यु को सोच लिया । मेघनाद ने माता को नमस्कार किया ।

२. हिन्दी में अनुवाद करो—

रामः जानकीं अपश्यत् । वानराः निशाचरीः अत्रासयत् । मेघनादः पुरीं अभ्रमत् । वीरान् चमूः अक्रन्तत् ।

३. निम्नलिखित शब्दों के लिंग बताओ—

लंकापुरीम्, लंकापुरम्, कपिम्, वानरम्, मन्दोदरीम्, मतिम् ।

द्वादशः पाठः

# बालचरसंवादः

(करणकारकम्, लोट्लकारः; अकारान्ताकारान्ताः शब्दाः)

बालचराध्यक्षः— राकेश ! त्वं कुत्र गच्छसि ?

राकेशः— अहं श्रीमतः **आज्ञया** कुत्र गच्छानि ?

अशोकदिनेशौ— आवां किम् सेवावहै ?

बालचराध्यक्षः— राकेश! त्वं द्विचक्रिकया आतुरालयं गच्छ; तत्र **औषधेन** रुग्णान् सेवस्व, वैद्यान् च मधुरं भाषस्व. चिकित्साकार्यान् च प्रेरय।

पुनः स एव— भो अशोकदिनेशौ! युवां ग्रामं गच्छतम्, तत्र **अन्नेन** लोकान् पालयतम्, वयस्कान् उपदेशैः

बोधयतम्, बालान् **कन्दुकेन** विनोदयतम्, **मित्राभ्याम्** सह कालं यापयतम् ।

छात्राः—श्रीमन् ! वयं कुत्र गच्छाम, किं च सेवामहै ?

बालचराध्यक्षः—साधु । यूयम् **कर्णेन** बधिरान्, **नेत्रेण** काणान्, **पादाभ्यां** च अपंगान् सेवध्वम् । यथासमयं इतः ततः भ्रमन्तः बुभुक्षितान् **अन्नेन**, मरुलोकान् **जलेन** तथा अन्यान् **विचारेण** भजध्वम् । नित्यं प्रातः यजध्वम्, परस्परं मधुरं भाषध्वम्, राष्ट्रे **सुखेन** वर्तध्वम् ।

पुनः स एव– अहं किम् अन्यत् वदानि ?

छात्राः—जनाः **उपवासेन** तपन्ताम्, सर्वे **धनेन** शोभन्ताम्, लोकाः **बलेन** राजन्ताम्, ललनाः **धर्मेण** एधन्ताम्, भ्रातरौ **सुखेन** वसेताम्. नृपः **दण्डेन** रक्षतु, सः **न्यायेन** प्रजाः प्रीणयतु—इति श्रीमन्तः **सुखेन** आशीर्वदन्तु ।

आज्ञा देने के अर्थ में लोट् लकार का प्रयोग होता है । पिछले दो पाठों में केवल 'कर्मकारक' का प्रयोग देखा है । इस पाठ में करण कारक का प्रयोग है । 'करण कारक' के लिए अकारान्त शब्द (जो पुंलिंग और नपुंसक लिंग में समान होते हैं ) और आकारान्त शब्द (स्त्रीलिंग) का प्रयोग इस पाठ में दिया है ।

(१) करण कारक में शब्दों के रूप—

| | | | |
|---|---|---|---|
| (पु० और न०) | तेन | ताभ्याम् | तैः |
| (स्त्रीलिंग) | तया | ताभ्याम् | ताभिः |

नए शब्द—

द्विचक्रिका=साइकिल, आतुरालय:=हस्पताल, औषधं=दवाई, रुग्ण:=बीमार, चिकित्सा=इलाज, वयस्क:=बड़ी उम्र वाला, कन्दुकं=गेंद, कर्णः=कान, बधिर:=बहरा बुभुक्षित:=भूखा, मरुलोक:=रेगिस्तान, उपवास:=व्रत, ललना=स्त्री, अपंग:= लंगड़ा।

नई धातुएं—

सेव्=सेवा करना, भाष्=बोलना, बोध्=समझाना, यापय् =बिताना, भज्=भजन करना, यज्-यज्ञ करना, प्रीणय्= प्रसन्न करना।

## अभ्यासः

१. संस्कृत में अनुवाद करो—

वह कान से बहरा है। वे आँखों से अंधे हैं। मैं उपदेशों से समझाता हूँ। तुम सब घर जाओ। हम दोनों कहाँ जाएं? तू रोगियों की सेवा कर। वे सब नित्य यज्ञ करें। तुम दो न्याय से प्रजा की रक्षा करो। सदा मन, वचन और कर्म से सत्य बोलो।

२. हिन्दी में अनुवाद करो—

प्रजाः धर्मेण एधन्ताम्। मातरौ सुखेन वसताम्। यूयं धर्मेण प्रवर्तध्वम्। ते विद्यालयस्य प्रबन्धं पश्यन्तु। त्वम् गृहं गच्छ तथा रुग्णं पितरं भजस्व। सर्वे वयं मधुरभाषणैः परिवारं सन्तोषयाम।

त्रयोदशः पाठः

# दमयन्ती

**(करणकारकम्, लङ्लकारः, इकारांत–उकरांताः शब्दाः)**

पुरा विदर्भनगरे भीमदेवः नृपः अभवत्। तस्य एका पुत्री दमयन्ती नामा आसीत्। सा सखीभिः सह प्रतिदिनं मन्दिरं अगच्छत्। सा गौर्याः प्रसादेन नलनामानं योग्यं वरं अलभत।

नृपः नलः प्रकृत्या सुशीलः, आकृत्या सुन्दरः, गत्या सिंहः, बुद्ध्या बृहस्पतिः, मत्या शुक्रः, रुच्या प्रभञ्जनः दीप्त्या च अग्निः आसीत्।

सः नलः कविभिः परिवृतः, भ्रात्रा मिलितः, पत्न्या प्रसन्नः, मुनिभिः स्तुतः, अतिथिभिः सम्मानितः, असिना अलंकृतः बहुकालं प्रजाः अपालयत्। परं द्यूते राज्यं दत्वा पत्न्या सह वनं अगच्छत्। तत्र एकान्ते पत्नीं त्यक्त्वा स अव्रजत्। दमयन्ती अपि निर्जनं वनं भ्रमन्ती व्याधस्य हस्ते गतापि वासुकिना रक्षिता। पशुभिः स्वाम् रक्षन्ती, साधुभिः मार्गं पृच्छन्ती, वल्लरीभिः स्वशाटिकां रक्षन्ती, व्याधिना स्खलन्ती, आधिना च

चिन्तयन्ती दमयन्ती येन केन प्रकारेण विदर्भं अगच्छत्, पितरं मातरं च अमिलत् ।

सा पुनः कल्पितस्वयंवरेण स्वपतिं नलं अलभत ।

नए शब्द—

नृपः=राजा, गौरी=पार्वती, प्रकृतिः=स्वभाव, रुचिः=पसन्द, दीप्तिः=दमक, व्याधः=शिकारी, वासुकी=साँप, व्याधिः=रोग, बल्लरी=बेल,

नई धातुएं—

भू=होना, अस्=होना, लभ्=पाना, व्रज्=जाना, ।

अभ्यासः

१. निम्नलिखित शब्दों के लिंग बताओ—

साधुभिः, वल्लरीभिः, आधिना, असिना, मुनिभिः, आकृत्या, प्रकृत्या ।

२. संस्कृत में अनुवाद करो—

मैं पत्नी के साथ घूमता हूँ । हम सब मित्रों के साथ समय बिताते हैं । तू बुद्धि से काम कर । वह शक्ति से शत्रुओं को जीते । तुम सब व्याधि से पीड़ित प्रजा की रक्षा करो ।

३. हिन्दी में अनुवाद करो—

सः करेण अलिखत् । युवां चरणाभ्याम् चलतम्, न रथेन गच्छतम् । अहं व्याधिना ज्वरामि । अहं पशुभिः आवृतः अस्मि ।

चतुर्दशः पाठः

# मौक्तिकानि

वेदः स्मृतिः सदाचारः, स्वस्य च प्रियमात्मनः ।
एतच्चतुर्विधं प्राहुः, साक्षात् धर्मस्य लक्षणम् ॥१॥

उद्यमः साहसो धैर्यम्, बुद्धिः शक्तिः पराक्रमः ।
षड् एते यत्र वर्तन्ते, तत्र देवसहायकः ॥ २ ॥

नमन्ति फलिनो वृक्षाः, नमन्ति सगुणाः जनाः ।
शुष्कवृक्षाश्च मूर्खाश्च, न नमन्ति कदाचन ॥ ३ ॥

आपत्काले तु संप्राप्ते, यन्मित्रं मित्रमेव तत् ।
वृद्धिकाले तु सम्प्राप्ते, दुर्जनोऽपि सुहृद् भवेत् ॥ ४ ॥

अयं निजः परो वेति, गणना लघुचेतसाम् ।
उदारचरितानां तु, वसुधैव कुटुम्बकम् ॥ ५ ॥

यस्मिन् देशे न सम्मानः, न प्रीतिः न च बान्धवाः ।
न विद्यागमः कश्चित्, तं देशं परिवर्जयेत् ॥ ६ ॥

सुखार्थी तु त्यजेत् विद्याम्, विद्यार्थी च त्यजेत् सुखम् ।
सुखार्थिनः कुतो विद्या, कुतो विद्यार्थिनः सुखम् ॥७॥

परोपकाराय फलन्ति वृक्षाः, परोपकाराय वहन्ति नद्यः ।
परोपकाराय दुहन्ति गावः, परोपकारार्थमिदं शरीरम् ॥८॥

विद्या विवादाय धनं मदाय,
शक्तिः परेषां परिपीड़नाय ।
खलस्य, साधोः विपरीतमेतत्,
ज्ञानाय दानाय च रक्षणाय ॥ ९ ॥

सत्यं दानं अनालस्यम्,
अनसूया क्षमा धृतिः ।
षड् एते तु गुणाः पुंसा,
न हातव्याः कदाचन ॥ १० ॥

मृगा मृगैः संगमनुव्रजन्ति,
गावश्च गोभिः तुरगाः तुरंगैः ।
मूर्खाश्च मूर्खैः सुधियः सुधीभिः,
समानशीलव्यसनेषु सख्यम् ॥ ११ ॥

वरमेको गुणी पुत्रो,
न च मूर्खशतान्यपि ।
एकश्चन्द्रस्तमो हन्ति,
न च तारागणोऽपि च ॥ १२ ॥

नए शब्द—

मौक्तिकं=मोती, परः=पराया, काकः=कौआ, कापुरुषः=कायर, विवादः=झगड़ा, बहस करना, मदः=अहंकार, खलः=दुष्ट, अनसूया=ईर्ष्या न करना, निधनम्=मृत्यु तुरंगः=घोड़ा ।

## अभ्यासः

१. निम्नलिखित शब्दों को वाक्यों में प्रयोग करो–

मौक्तिकानि । परोपकारः । वृक्षः । मित्रम् । वसुधा । निधनम् ।

२. निम्नलिखित वाक्यों को शुद्ध करके लिखो–

शुष्कवृक्षः मूर्खः च न नमन्ति । यस्मिन् देशात् न सम्मानम् । मृगाः मृगात् संगमनुव्रजन्ति ।

३. हिन्दी में अर्थ करो–

ते फलिनः वृक्षान् पश्यन्ति । त्वम् कथं मौक्तिकानि गणयसि ? रामः परोपकाराय जीवनं धारयति । तुरंगः शीघ्रं धावति । स मन्दं मन्दं चलति । गुणिना पुत्रेण कुलं शोभते ।

४. संस्कृत में अनुवाद करो–

वे सब मोती फैंकते हैं। वह शहद खाता है। तू फल वाले वृक्ष को देख। मृग तालाब पर बैठे हैं। कई मृग खड़े हैं। कई मृग घास खाते हैं और बाकी मृग पानी पीते हैं।

पंचदशः पाठः

# कुमारचरितम्

**(सम्प्रदानकारकम्, लट्लकारः, अ-आकारान्तशब्दाः)**

(१) बालानां सुन्दरं नामकरणं **सर्वेभ्यः** रोचते, बालाः अपि **तस्मै** स्पृहयन्ति ।

(२) सज्जनाः स्वगृहे परगृहे च सर्वेभ्यः **बालकेभ्यः** श्लाघन्ते ।

(३) मातरः कदापि **सुतेभ्यः** न शपन्ते ।

(४) पिता प्रातः सायं परमेश्वरात् **सुताय** भजते ।

(५) सुशिक्षिताः बालकाः **पठनाय** प्रभवः भवन्ति, **व्यायामाय** शक्ताः भवन्ति, **आत्मविकासाय** अलम् भवन्ति ।

(६) श्रेष्ठाः बालकाः **राष्ट्राय** व्रतं धारयन्ति, **अध्ययनाय** च व्रजन्ति ।

(७) सहोदराः **उन्नतिशीलाय भ्रात्रे** न ईर्ष्यन्ति ।

(८) बालाः **गुरुजनाय** नमन्ति; गुरवः अपि **तेभ्यः** स्वस्ति कथयन्ति ।

(९) जननी **कुमारेभ्यः** न **क्रुध्यति** ।

(१०) सर्वं इदं विश्वं **बालराष्ट्राय** हितम् भवति ।

(११) गृहस्थाः जनाः **कुमाराय** हितं आचरन्ति ।
(१२) राष्ट्रजनाः **बालाभ्यः** न असूयन्ति ।
(१३) आर्याः **कन्यायै** भद्रं वदन्ति, पुष्कलं धनं च ददति ।
(१४) छात्राः **छात्रायै छात्राभ्यः** वा न द्रुह्यन्ति, सुष्ठु च ईक्षन्ते ।

कर्म और करण कारक के ज्ञान के बाद इस पाठ में चतुर्थी विभक्ति अर्थात् सम्प्रदान कारक के लिए अकारान्त और आकारान्त शब्द लिए गये हैं ।

नए शब्द–सुतः=पुत्र, प्रभुः=समर्थ या स्वामी, आत्मविकासः =अपनी उन्नति करना, व्रतं=नियम, स्वस्ति= आशीर्वाद, भद्रम्=सुखदायक या कल्याण, पुष्कलं =बहुत ।

नई धातुएं—रुच्=अच्छा लगना, स्पृह्=चाहना, श्लाघ्– प्रशंसा करना, शप्=गाली देना, भज्=भजन करना, द्रुह्=द्रोह करना, क्रुध्–क्रोध करना ।

## अभ्यासः

१. संस्कृत में अनुवाद करो–

मैं बच्चों के लिए नित्य मिठाई लाता हूँ । हम दोनों पढ़ने के लिए विद्यालय जाते हैं । तू भाई के लिए क्यों द्रोह करता

है । बहनें भाइयों के लिए आशीर्वाद देती हैं । सारे अध्यापक बच्चों के लिए हित चाहते हैं । बड़ों को नमस्कार हो ।

२. हिन्दी में अर्थ करो–

माता कनिष्ठाय बालकाय भोजनं पचति । शासकाः शिक्षया, धनेन, कल्याणकामनया वा बालकान् भजन्ते । पितरौ वीराय पण्डिताय योग्याय च पुत्राय श्लाघेते । ते बालेभ्यः नमन्ति, स्तुवन्ति, क्रीड़नकानि च आनयन्ति ।

३. सम्प्रदान कारक का प्रयोग उदाहरण सहित स्पष्ट करो ।

षोडशः पाठः

# यशोदायाः उपदेशः

(सम्प्रदानकारकम्, लृट्लकारः (इ-ई-उ-ऊकारान्ताः शब्दाः)

यदा भगवान् कृष्णः मथुरां प्रति अव्रजत्, तदा तस्य माता यशोदा तम् लालयन्ती अकथयत् ।

"हे कृष्ण! त्वं मथुरां गच्छन् मम **वाण्यै** स्थास्यसि; निरन्तरं **वृष्णिभ्यः** भजिष्यसि; नित्यं प्रातः **मात्रे पित्रे** च नंस्यसि; तौ अपि **शौरये** स्वस्ति कथयिष्यतः । त्वं नित्यं **अरिभ्यः** अलं भविष्यसि, **आजये** शक्तः, **हस्तिभ्यः** समर्थः च भविष्यसि । त्वं **कविभ्यः** नित्यं रोचिष्यसे । **पृथ्व्यै** सततं ईक्षिष्यसे । त्वं जगतः **देवीभ्यः** हितं चरिष्यसि । **ऋषिभ्यः** व्रतं धारयिष्यसि । **धेनुभ्यः** प्रभविष्यसि । **अतिथिभ्यः** मा असूयिष्यसि । एवं ऋषयः अपि तुभ्यं चक्रपाणये श्लाघिष्यन्ते ।

पिछले पाठ में सम्प्रदान कारक के लिए अकारान्त आकारान्त शब्दों का प्रयोग हुआ है। इस पाठ में इ-ई-उ-ऊकारान्त शब्द हैं और लृट् लकार का प्रयोग है। धातुएं आत्मनेपदी और परस्मैपदी दोनों हैं।

नए शब्द–

कुमारः=बालक, शौरिः=विष्णु, अरिः=शत्रु, आजिः=युद्ध, सततम्=निरन्तर, हृतिः=हथियार, हरिः=विष्णु, धेनुः=गाय, चक्रपाणिः=विष्णु, वाणी=बात।

नई धातुएं–

स्था (तिष्ठ)=ठहरना, नश्=नष्ट होना, रुच्=पसन्द आना, ईक्ष्=देखना, चर्=करना, असूय्=जलना।

अभ्यासः

१. अर्थ करो–

ब्राह्मणाय धेनुं ददाति। जनाः चक्रपाणये नमः वदन्ति। गृहिणी अतिथिभ्यः भोजनं पचति। धनिकाः निर्धनेभ्यः धनं यच्छन्ति। मह्यं आम्रं रोचते।

२. संस्कृत में अनुवाद करो–

माता पुत्र को दूध देती है। बच्चे खेलने के लिए जाते हैं। राम स्नान के लिए नदी में जाता है। पिता पुत्र को बहुत चाहता है। क्षत्रिय युद्ध के लिए जाता है।

सप्तदशः पाठः

# सीतानुसूया-संवादः

(अपादानकारकम्, लोट्लकारः, अकारान्त-आकारान्तशब्दाः)

पुरा अयोध्यानगरात् धवेन सह वनं गच्छन्ती सीता अत्रिं ऋषिं अपश्यत्, तस्य पत्नीं अनुसूयां अमिलत्। तस्याः पादयोः च नत्वा सविनयं अभणत्-हे देवि ! माम् उपदिश !

अनुसूया अवदत्—हे सीते ! त्वम् नगरात् आगता असि, न हि त्वाम् कथनीयं किंचित् अस्ति। तथापि तव संतोषार्थं किंचित् वदामि—

"त्वम् **स्वकर्तव्यात्** मा पत; पुनः पुनः दुष्कृतात् विरम; वने **राक्षसेभ्यः** मा त्रस्य; **दुष्टेभ्यः** समाजं त्रायस्व; धर्मग्रन्थानां **अध्ययनात्** मा पराजयस्व; **असंगतेभ्यः** स्वविचारान् वारय; **व्रतेभ्यः** सदाचारः प्रभवति

इति मन्यस्व; **सुशासनात्** राष्ट्रं ईक्षस्व; **धवात्** इतरः कश्चित् पुरुषः नास्तीति विचारय; **धनात्** ऋते अन्यत् नास्ति इति मुञ्च; शु**भेभ्यः विचारेभ्यः** शतयोजनं कुबुद्धि मन्यस्व; **ललनाभ्यः** सृष्टिः प्रभवति, इति ताः सम्मानय।"

"हे राम! **राष्ट्रात्** बिना न अन्यत् रक्षणीयमिति विचारय; **राजधर्मात्** मा पत; **दुष्टेभ्यः विचारेभ्यः** विरम, **आचारात्** मा पराजयस्व; **पापेभ्यः** देशं रक्ष; **सीतायाः** ऋते परललनां मा ईक्षस्व, **समरात्** मा धाव; **अधर्मात्** विरम" इति मम कथनीयम् अस्ति।

प्रस्तुत पाठ में अपादान कारक तथा लोट् लकार का प्रयोग है। इसमें अकारान्त और आकारान्त शब्द ही हैं।

(१) नए शब्द—

धवः=पति, सन्तोषार्थम्=सन्तोष के लिए, अमंगलं=अशुभ सुशासनं=अच्छा शासन, ऋते=बिना, ललना=स्त्री, सृष्टिः = संसार, समरः=युद्ध।

नई धातुएं—

विरम्=रुकना, त्रस्=डरना, त्रा=बचाना, मुञ्च्=छोड़ना, प्रवृत=प्रवृत्त होना, धाव्=दौड़ना।

## अभ्यासः

(१) रिक्त स्थानों की पूर्ति करो :—

त्वम्………आगतासि । दुष्टेभ्यः………त्रायस्व । समरात् ………।………पराजयस्व । ललनाभ्यः सृष्टि :—

(२) हिन्दी में अर्थ करो :—

आचारात् मा पराजयस्व । व्रतेभ्यः सदाचारः प्रभवति । नरः अश्वात् पतति । विद्यार्थी पापात् दूरं धावति । सिंहः नगरात् धावति ।

(३) संस्कृत में अनुवाद करो :—

तू नगर से आया है । राम ! शत्रुओं से अपने राष्ट्र की रक्षा करो । बुरे विचारों से दूर रहो । वृक्ष से पत्ते गिरते हैं । विद्या के बिना सुख नहीं । बालक शेर से डरता है ।

अष्टादशः पाठः

# गंगावतरणम्

(अपादानकारकम्, भूतकालः, इ-ई-उ-ऊकारान्तशब्दाः)

पुरा विधेः कमण्डलौ गंगा अवसत्। सा सुखेन कालं अयापयत्। परं राजा भगीरथः तां गंगां भूमौ आनेतुं अतपत्।

भगीरथस्य व्रतेन प्रीतः विधिः प्रकटीभूय अकथयत्—"वरं वद"। भगीरथः अकथयत्—"गंगां याचे"।

ततः विधिः कमण्डलोः गंगां अच्यावयत्। गंगा अपि विधेः पृथग्भूता सहस्त्र-संख्यासु धारासु विभक्ता आकाशे पतन्ती, भाग्यं स्मरन्ती, भगीरथं क्रोशन्ती, पापान् कल्पमाना, वायुना वेपमाना, क्षणं क्षणं वर्धमाना नीचैः अपतत्। कमण्डलोः आगता गंगा प्रथमं शिवस्य भालं आगच्छत्।

गंगा शिवस्य **मौलेः** पृथ्वीं अपश्यत् । पशुपतेः **रतेः** जड़ीभूता गंगा भगीरथं न अस्मरत् । सः पुनः अतपत् । प्रसन्नः शिवः गंगां अददात् । इयं हरिद्वार-प्रयाग-काशी कलकत्ता-**प्रभृतेः बहुभ्यः नगरीभ्यः** आरात् प्रवहति । इयं मन्दाकिनी **नदीभ्यः** प्रतिनिधिः वर्तते तथा च **प्रणतेः** मुक्तिं भुक्तिं विभूतिं च प्रतियच्छति ।

**हिमगिरेः** पतन्ती, पुरीभ्यः आरात् वहन्ती. **जलधिं** प्रति व्रजन्ती, सर्वाभ्यः **नदीभ्यः** पृथक् गंगा भूमिं पालयति, पापान् नाशयति सुविचारान् च पोषयति ।

पिछले पाठ में अपादान कारक में केवल अकारान्त तथा आकारांत शब्द हैं । इस पाठ में भी अपादान कारक ही है, परन्तु इसमें इ-ई-उ-ऊकारांत शब्दों का प्रयोग है ।

(१) नए शब्दः—

विधिः=ब्रह्मा, क्रोशन्ती=चिल्लाती हूई, कल्पमाना=कल्पना करती हुई, वेपमाना=कांपती हुई, वर्धमाना=बढ़ती हुई, भालः=माथा, मौलिः=मस्तक, रतिः=प्रेम पशुपतिः=शिव, मन्दाकिनी=गंगा, भागीरथी=गंगा, प्रभृति=आदि, प्रणतिः

=झुकना हिमगिरिः=हिमालय, आरात्=समीप, जलधिः =समुद्र ।

नई धातुएं—

वस्=रहना, याप्=बिताना, च्यव्=बहना, तप्=तपस्या करना, वह्=बहना ।

## अभ्यासः

१. संस्कृत में अनुवाद करो–

राजा भगीरथ ने तप किया । गंगा आकाश से पृथ्वी पर आई । गंगा का जल पवित्र और शीतल है । शिव ने गंगा को अपने माथे पर धारण किया । प्राचीन समय में गंगा ब्रह्मा के कमण्डलु, में रहती थी ।

२. अपादान कारक का प्रयोग उदाहरण सहित स्पष्ट करो ।

एकोनविंश: पाठः

# सूक्तयः

सुखस्य दुःखस्य न कोऽपि दाता,

परो ददातीति कुबुद्धिरेषा ।

अहं करोमीति वृथाभिमानः,

स्वकर्मसूत्रग्रथितो हि लोकः ॥ १ ॥

स्थानभ्रष्टा न शोभन्ते,

दन्ताः केशाः नखाः नराः ।

इति सञ्चिन्त्य मतिमान्,

स्वस्थानं न परित्यजेत् ॥ २ ॥

भोगा न भुक्ता वयमेव भुक्ताः,

तपो न तप्तं वयमेव तप्ताः ।

कालो न यातः वयमेव याताः,

तृष्णा न जीर्णा वयमेव जीर्णाः ॥ ३ ॥

रात्रिः गमिष्यति भविष्यति सुप्रभातम्,

भास्वान् उदेष्यति हसिष्यति पंकजश्रीः ।

इत्थं विचिन्तयति कोशगते द्विरेफे,

हा ! हन्त हन्त! नलिनीं गज उज्जहार ॥४॥

मुक्ताफलैः किं मृगपक्षिणां च,
मिष्टान्नपानं किमु गर्दभानाम् ।
अन्धस्य दीपः, बधिरस्य गीतम्
मूर्खस्य किं शास्त्रकथाप्रसंगः ॥ ५ ॥

सर्पाः पिबन्ति पवनं न च दुर्बलास्ते
शुष्कैः तृणैः वनगजाः बलिनः भवन्ति ।
कन्दैः फलैः मुनिवराः क्षपयन्ति कालम्,
सन्तोष एव पुरुषस्य परं निधानम् । ६ ।

सत्यमेवेश्वरः लोके, सत्ये धर्मः सदाश्रितः ।
सत्यमूलानि सर्वाणि, सत्यान्नास्ति परं पदम् ॥७॥

निरुत्साहस्य दीनस्य, शोकपर्याकुलमानसः ।
सर्वार्था व्यवसीदन्ति, व्यसनं चाधिगच्छति ॥ ८ ॥

असतां दर्शनात् स्पर्शात्, सज्जल्पात् सहासनात् ।
धर्माचाराः प्रहीयन्ते, सिध्यन्ति च न मानवाः ॥९॥

धर्मेणैव जनाः तीर्णाः, धर्मे लोकाः प्रतिष्ठिताः ।
धर्मेण ववृधुः देवाः, धर्मे चार्थाः समाहिताः ॥१०॥

द्विषतः परकाये माम्, मानिनः भिन्नदर्शिनः ।
भूतेषु बद्धवैरस्य, न मनः शान्तिमृच्छति ॥११॥

भिद्यते हृदयग्रन्थिः, छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि, तस्मिन् दृष्टे परावरे ॥१२॥

नए शब्द–

ग्रथितः=बन्धा हुआ, भ्रष्टः=गिरा हुआ, पंकजं=कमल, भास्वान्=सूर्य, श्रीः=शोभा, द्विरेफः=भ्रमर (भौंरा), नलिनी =कमलिनी, मिष्टान्नं=मिठाई, गर्दभः=गधा, बधिरः= बहरा, तृणं=तिनका, निधानं=खजाना, पदम्=स्थान, विवादः =दुःख, उरगः=सांप, व्यसनं=दुःख ।

नई धातुएं–

उद्=उदय होना, क्षप्=बिताना ।

### अभ्यासः

१. नीचे लिखे वाक्यों को शुद्ध करो–

ते स्नानाय नदीं गच्छनः । किं त्वम् विद्यालये गच्छसि । बालिकाः उद्याने कन्दुकेण क्रीणन्ति । वयम् हस्तेभिः लिखामः । कृष्णः रामं फलं ददाति ।

२. संस्कृत में अनुवाद करो–

हम धर्म का पालन करते हैं । सत्य बोलने से सब काम सिद्ध होते हैं । शत्रुओं से प्रेम करने से शान्ति प्राप्त होती है । सूर्य पूर्व में उदय होता है । भौंरे फूलों पर गूँजते हैं ।

३. हिन्दी में अनुवाद करो–

मूर्खः शास्त्रकथाभिः न तुष्यति । उपवने पंकजम् विकसति । आकाशे भास्वान् दीव्यति । उत्सवे बालकाः मोदन्ते ।

विंशः पाठः

# जन्तुशाला

**(सम्बन्ध-विभक्तिः, वर्तमानः, अकारान्ताकारान्ताः शब्दाः)**

छात्राः पंक्त्या आगच्छन्ति, गुरोः आज्ञया जन्तुशालां प्रविशन्ति। तत्र **जन्तुशालायाः** कक्षं कक्षं भ्रमन्तः छात्राः पशून् पश्यन्ति, गुरुः तान् प्रतिबोधयति—

गुरुः—भो छात्राः ! एषः गजः अस्ति। **गजस्य** द्वौ कर्णौ भवतः, एषा शुण्डा अस्ति, एतत् लांगूलम् च वर्तते। **कर्णयोः** उपरि गण्डे भ्रमराः तिष्ठन्ति, स च तान् कर्णैः ताडयति। **शुण्डायाः** अन्तः महत् छिद्रं भवति, येन जलं

आकर्षन् गजः मुखे क्षिपति । गजस्य आकारः महान् अस्ति ।

एषः भल्लूकः अस्ति । **भल्लूकस्य** आकृतिः अर्धमानवी वर्तते; स मनुष्यस्य सदृशं खादति, चलति, तिष्ठति, नृत्यति च । एषः **वनस्य** जीवः अस्ति । परं **मानवस्य** हस्ते गतः **नागरिकस्य** पशोः जीवनं यापयति ।

एताः चटकाः सन्ति । **चटकायाः** चञ्चुः सुन्दरः भवति । **चटकानां** पिच्छाः अपि मनोहराः भवन्ति । **अस्याः कपोतिकायाः** उड्डयनम् सुन्दरं अस्ति । **सारसस्य** तरणं चित्तं हरति । **बकस्य** ध्यानं मह्यं न रोचते । **हंसस्य** शुभ्रता मनः मोहयति । सर्वे जनाः **मयूरस्य** नृत्यं पश्यन्ति, मोदन्ते च ।

एषः सिंहः अस्ति । **सिंहस्य** केशाः कपिशाः भवन्ति । **तस्य** नखाः अपि तीक्ष्णाः भवन्ति । **मुखस्य** जृम्भणं त्रासयति । मुखे **दंष्ट्राणां दन्तानां** च भयानकता अपि त्रासयति । एषः सिंहः **वनस्य मृगाणां** राजा भवति । अतः एव स मृगराजः कथ्यते ।

'सम्बन्ध' कारक नहीं होता, बल्कि वह विभक्ति मात्र होता है । वर्तमान काल की परस्मैपदी और आत्मनेपदी धातुओं के साथ केवल अकारान्त एवं आकारान्त शब्दों का प्रयोग यहाँ दिया है ।

नए शब्द–

जन्तुशाला=चिड़िया-घर, शुण्डा=सूंड, लांगूलं=पूँछ, द्विपः=हाथी, भल्लूकः=भालू, चटका=चिड़िया, चञ्चुः=चोंच, कपोतिका=कबूतरी, सारसः=सारस, बकः=बगुला ।

नई धातुएं–

याप्=बिताना, त्रस्=डरना ।

## अभ्यासः

१. हिन्दी में अर्थ करो–

गजस्य शुण्डा शोभना वर्तते । ईश्वरस्य पूजा भवति । भल्लूकस्य मुखं भयानकं वर्तते । वानरस्य लांगूलं कम्पते । बालकाः मयूरस्य नृत्यं पश्यन्ति ।

२. संस्कृत में अनुवाद करो–

सिंह हरिणों को खाता है । राजा का नौकर भोजन लाता है । बन्दर पक्षियों के अण्डे नष्ट करता हैं । हंस का रंग सफेद होता है । नगर के मनुष्य मयूर का नृत्य देखते हैं और प्रसन्न होते हैं ।

३, रिक्त स्थानों की पूर्ति करो–

सिंहस्य केशाः...........भवन्ति । कपोतिकायाः..................सुन्दरमस्ति । बकस्य...........मह्यम्.........रोचते । छात्राः...........आज्ञां पालयन्ति । गजस्य आकारः...........अस्ति ।

## एकविंशः पाठः

# प्रकीर्णाः श्लोकाः

सुभाषितप्रशंसा—

भाषासु मुख्या मधुरा दिव्या गीर्वाणभारती ।
तस्माद्धि काव्यं मधुरं तस्मादपि सुभाषितम् ॥१॥

संसार-कटुवृक्षस्य, द्वे फले ह्यमृतोपमे ।
सुभाषित-रसास्वादः, संगतिः सुजने जने ॥२॥

पृथिव्यां त्रीणि रत्नानि, जलमन्नं सुभाषितम् ।
मूढैः पाषाण-खण्डेषु, रत्नसंज्ञा विधीयते ॥३॥

विद्याप्रशंसा—

अपूर्वः कोऽपि कोशोऽयं, विद्यते तव भारति ।
व्ययतो वृद्धिमायाति, क्षयमायाति संचयात् ॥४॥

अनेकसंशयोच्छेदि, परोक्षार्थस्य दर्शकम् ।
सर्वस्य लोचनं शास्त्रं, यस्य नास्त्यन्ध एव सः ॥५॥

विद्या ददाति विनयं, विनयाद्याति पात्रताम् ।
पात्रत्वाद्धनमाप्नोति, धनाद्धर्मं ततः सुखम् ॥६॥

दानमहिमा—

गौरवं प्राप्यते दानात्, नतु वित्तस्य संचयात् ।
स्थितिरुच्चैः पयोदानां, पयोधीनामधः स्थितिः ॥७॥

दरिद्रान् भर कौन्तेय, मा प्रयच्छेश्वरे धनम् ।
व्याधितस्यौषधं पथ्यं, नीरुजस्य किमौषधैः ॥८॥
दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ।
देशे काले च पात्रे च, तद्दानं सात्विकं विदुः ॥९॥

सत्संगतिमहिमा—

काचः काञ्चन-संसर्गात्, धत्ते मारकतीर्द्युतीः ।
तथा सत्संनिधानेन, मूर्खो याति प्रवीणताम् ॥१०॥
चन्दनं शीतलं लोके, चन्दनादपि चन्द्रमाः ।
चन्द्रचन्दनयोर्मध्ये, शीतला साधुसंगतिः ॥११॥
साधूनां दर्शनं पुण्यं, तीर्थभूता हि साधवः ।
कालेन फलते तीर्थं सद्यः साधुसमागमः ॥१२॥

## अभ्यासः

(१) सन्धिच्छेद करो–

तस्मादपि, ह्यमृतोपमे, कोऽपि, नास्त्यन्धः, यद्दानं, जलमन्नं, चन्दनादपि ।

(२) पद परिचय दो–

तस्मात्, द्वे, त्रीणि, पृथिव्यां, ददाति, प्रयच्छ, प्राप्यते, मूढैः, कस्य, दातव्यम् ।

(३) अनुवाद करो–

संस्कृत भाषा देवों की वाणी है। सज्जनों के सुन्दर वचन अमृत के समान होते हैं। विद्या से सुख प्राप्त होता है। निर्धनों

को अवश्य दान देना चाहिए। संत्सगति से नीच मनुष्य भी तर जाता है। दान से कीर्ति प्राप्त होती है। विद्या-हीन मनुष्य पशु के समान है।

(४) निम्नलिखित प्रश्नों का उत्तर संस्कृत में दो–

(क) विद्यायाः किं महत्त्वं अस्ति ?

(ख) कः कोशः व्ययतः अपि वर्धते ?

(ग) केषां दर्शनं पुण्यदायकं भवति ?

(घ) सत्संगस्य किं फलं भवति ?

(ङ) किं दानं सात्विकं भवति ?

(५) इस पाठ के कोई पाँच श्लोक अर्थ सहित याद कर उनका गान करो।

### द्वाविंशः पाठः

# चौरः

## (अधिकरणकारकम्, वर्तमानकालः, अकारान्ता-कारान्ताः शब्दाः)

कश्चित् जीर्णधनो नाम **चौरेषु** प्रसिद्धः चौरः अस्ति। सः पुत्रेण सह चौर्याय नगरं गच्छति, पुत्रं च कथयति—'हे तात ! अयं धनिकेषु अधिकः **व्यापारे** निपुणः, **ग्रामयोः** स्वामी दीनेषु च कृपणः अस्ति। त्वम् अधुना मया सह **आसने** तिष्ठ, आवाम् **सूर्यास्ते** व्रजिष्यावः चोरयिष्यावः च।

**गते समये** सः चौरः पुत्रेण सह चलति। पुत्रः धनिकस्य गृहे ज्वलन्तं दीपं पश्यति, वदति च; तिष्ठ ! तिष्ठ ! तात ! अधुना तस्य भवने दीपं पश्यामि।

सः चौरः भणति— हे पुत्र ! अहं दशवारं **पूर्वकाले** अत्र चोरितवान् अस्मि।

पुत्रः वदति—हे तात ! दशवारं कृते अपि चौर्य-कार्ये तस्मिन् गृहे दीपः ज्वलति । अस्माकं कुटीरे तु दीपः न प्रकाशयति, अथच दीपाय तैलमपि नास्ति । किम् कारणं अत्र ?

चौरः कथयति—हे पुत्र ! धन्योऽसि त्वम् । तव कथनेन ज्ञानवान् अस्मि । त्वम् सामान्येषु जनेषु अधिकः असि । न अहं अधुना चौर्ये कार्ये उत्सुकः अस्मि । अधुना रात्रौ प्रतिज्ञां करोमि, सर्वेषु कार्येषु श्रमं एव श्रेष्ठं वदिष्यामि । श्रमे धनम्, अस्मिन् एव कीर्तिः, शान्तिः च—अस्ति इति सत्यं स्मरामि ।

क्रमानुसार सप्तमी विभक्ति अर्थात् अधिकरण कारक का प्रयोग इस पाठ में दिया है । इसमें वर्तमान काल की क्रियाएं तथा अकारान्त एवं आकारान्त शब्दों का प्रयोग है ।

नए शब्द–

धनिकः=अमीर, पूर्वकाले=पहले, कुटिरः=कुटिया, श्रमः=मेहनत ।

नई धातुएं–

व्रज्=जाना, चुर्=चुराना, भाष्=बोलना ।

अभ्यासः

१. संस्कृत में अनुवाद करो–

उसके घर में दीपक जलता है । वह चोरों में प्रसिद्ध चोर

है। सभा में बुद्धिमान् मनुष्य बैठे हैं। क्या तुम्हारा भाई व्यापार में निपुण है? चोर सूर्यास्त होने पर चोरी करते हैं।

२. हिन्दी में अर्थ करो–
त्वम् उपवने किमर्थं गच्छसि। भ्रमराः पुष्पेषु स्वपन्ति। श्रमे धनं कीर्तिः शान्तिश्च अस्ति। सत्यभाषणे जीवनस्य उपयोगिता अस्ति। चन्द्रमा रात्रौ आकाशे दीव्यति।

३. इन शब्दों के तृतीया पंचमी तथा सप्तमी के रूप लिखो–
भार्या, गुरुः, नदी, वारि।

त्रयोविंशः पाठः

# व्यायामः

(संबोधनविभक्तौ लोट्लकारः सर्वे शब्दाः च)

अध्यापकः—भोः छात्राः ! अनुस्कन्धं तिष्ठत ।

(छात्राः अनुस्कन्धम् तिष्ठन्ति)

अध्यापकः—भोः ! क्रमशः गणयत ।

छात्राः—एकः, द्वौ, त्रयः, चत्वारः, पञ्च, षड् (इति गणयन्ति) ।

अध्यापकः–भोः छात्राः ! समसंख्याकाः पुरस्तात्, विषमसंख्याकाः एकपादम् पश्चात् गमिष्यन्ति । गच्छत !

(छात्राः द्वयोः रेखयोः विभजन्ते)

अध्यापकः—सम-संख्यकानां नेता नवलकिशोरः, विषमसंख्याकानां नेता युगलकिशोरः भविष्यति । युवाम्

दलेन सह विभजताम्, पूर्वपश्चिमदिशोः तिष्ठ-ताम् ।

(द्वौ छात्रौ तथा भवतः)

नवलकिशोरः--**भो मोहन** ! त्वम् दूरे तिष्ठ, कन्दुकम् रक्ष । **भो यज्ञदत्त** ! त्वम् वामपार्श्वतः खेल । **भो अग्निमित्र** ! त्वम् च दक्षिण-पार्श्वतः क्रीड़ । **अवशिष्टाः छात्राः** ! यूयम् मध्ये क्रीड़न्तः प्रतिपक्षं कन्दुकैः ताडयत, स्वपक्षं रक्षत ।

युगलकिशोरः--**भो सुरेन्द्र** ! त्वम् मोहनवत् दूरं तिष्ठ कन्दुकं रक्ष । **भो नरेन्द्र** ! त्वम् वाम-भागतः क्रीड़ । **भोः सुशील** ! त्वं च दक्षिणभागतः खेल । **सर्वे छात्राः** ! यूयम् मध्ये खेलन्तः प्रतिपक्षं कन्दुकैः मारयत, स्वपक्षम् प्रतिपालयत ।

अध्यापकः--**नेतारौ** ! यं छात्रं कन्दुकं स्पृशन् गच्छति, अथवा कन्दुकं यस्मिन् पतति, तौ उभौ नियमानुसारतः वहिः भविष्यतः । **छात्राः** ! यूयम् क्रीड़त ।

(सर्वे छात्राः कन्दुक-प्रतारणैः खेलन्ति)

अध्यापकः—बालाः ! खेलनात् विरमत । माम् अनुगच्छत ।

(सर्वे विरमन्ति अध्यापकं च अनुगच्छन्ति)

बालाः ! नितरां प्रसन्नः अस्मि । राकेश! तव कन्दुकप्रतारणं अतिसुन्दरम् आसीत् । नरेन्द्र ! तव उत्फालनं रुचिकरं अभवत् । वीरेशज्ञानेशौ ! युवयोः आत्मरक्षणं सर्वे दर्शकाः प्रशंसन्ति । अशोकदिनेशौ ! युवयोः खेलनं श्रेष्ठतरं इति वदामि । सर्वे पुरस्कारं लप्स्यन्ते-इति विचारयामि ।

सम्बोधन कारक नहीं है, बल्कि विभक्ति है । सम्बो॰ के साथ प्रायः मध्यम पुरुष का प्रयोग होता है। इस पाठ में परस्मैपदी तथा आत्मनेपदी धातुओं का लोट् लकार में प्रयोग किया है ।

नए शब्द :—
वामपार्श्वतः=बाईं ओर से. कन्दुकं=गेंद, उत्फालनम्=उछालना, अनुस्कन्धम्=कन्धे के अनुसार (कन्धे के अनुसार बड़े से छोटा और छोटे से छोटा) ।

नई धातुएं :—
गण्=गिनना, रक्ष्=बचाना. लभ्=प्राप्त करना ।

अभ्यासः

१. सम्बोधन विभक्ति का प्रयोग कर पांच वाक्य बनाओ ।

२. हिन्दी में अनुवाद करोः—

बालकाः ! आगच्छत। वयम् खेलामः। किं त्वं वामपार्श्वतः कन्दुकं न रक्षसि ? सर्वे बालकाः गुरुमनुगच्छन्ति। अध्यापकः छात्रान् आदिशति, "यूयम् अनुस्कन्धं तिष्ठत।"

३. संस्कृत में अनुवाद करो :—

बच्चो ! बुरे मनुष्यों की संगति से बचो। दिनेश ! सदा बड़ों का कहना मानो। अशोक ! अपना काम नियत समय पर करो। कभी किसी की निन्दा मत करो। राकेश ! सदा प्रातः उठकर माता पिता को नमस्कार करो। दुःखियों पर दया करो और दुष्टों पर क्रोध करो।

चतुर्विंशः पाठः

# संवादे व्याकरणम्

यज्ञश्रीः—भोः देवेन्द्र ! इह आगच्छ !

देवेन्द्रः—मित्र ! किम् कथयसि ?

यज्ञश्रीः—कस्यां कक्षायां पठसि ।

देवेन्द्रः—सप्तम्यां श्रेण्यां पठामि ।

यज्ञश्रीः—किं त्वम् विभक्तिकारकयोः अन्तरं कथयसि?

देवेन्द्रः—कथयामि ।

यज्ञश्रीः—का नाम विभक्तिः ?

देवेन्द्रः—शब्दस्य प्रत्ययः विभक्तिः । यथा—रामः, कृष्णौ, देवान्, ऋषिम्, कपी, गिरयः, नद्या, वधूभिः, मत्यै, फलानि इत्यादयः ।

यज्ञश्रीः–साधु ! **कारकस्य** किम् लक्षणम् ?

देवेन्द्रः–संज्ञाक्रिययोः सम्बन्धः **कारकम्** भवति ।

यज्ञश्रीः–यथा ।

देवेन्द्रः– **रामः खादति** ; अत्र रामः कर्तृकारकम् । रामः **भोजनम्** खादति ; अत्र 'भोजनम्' कर्मकारकम्।रामः **हस्तेन** भोजनं खादति; अत्र 'हस्तेन' इति करणकारकम् । रामः **स्वास्थ्याय** हस्तेन भोजनम् खादति; अत्र 'स्वास्थ्याय' इति सम्प्रदानकारकम् । रामः स्थाल्याम् स्वास्थ्याय हस्तेन भोजनम् खादति; अत्र 'स्थाल्याम्' अधिकरण-कारकम्। कर्ता, कर्म, करणम् सम्प्रदानम्, अपादानम् अधिकरणम् च क्रियया युक्तानि कारकाणि सन्ति ।

यज्ञश्रीः–षष्ठीसम्बोधने कथम् न कथिते ?

देवेन्द्रः–षष्ठी सम्बन्धविभक्तिः, सम्बोधनं च अपि विभक्तिः, एतौ कारकौ न स्तः ।

यज्ञश्रीः–को नाम सम्बन्धः ?

देवेन्द्रः **–पदार्थस्य पदार्थेन योगः सम्बन्धः** । यथा—**रामस्य हस्तौ** । अत्र रामः अपि पदार्थः, हस्तौ अपि पदार्थः नात्र क्रियायोगः । एवम् सम्बोधने अपि ।

यज्ञश्रीः–साधु भवान्! त्वम् संस्कृतज्ञानस्य अधिकारी असि । किम् त्वम् क्रमशः कारकाणाम् प्रयोगं अपि स्मरसि ?

देवेन्द्रः-आम् । अधिकरण-अपादान-सम्प्रदान-करण कर्मसु क्रमशः पूर्वं पूर्वं प्रयोगः भवति । आदौ कर्ता अन्ते च क्रिया भवतः । यथा—

(१) रामः मार्गे चलति, अत्र केवलम् अधिकरणम् ।

(२) रामः मार्गे गृहात् चलति । अत्र अधिकरणम् अपादानम् च ।

(३) रामः मार्गे गृहात् वधाय चलति । अत्र सम्प्रदानम् अधिकम् अस्ति ।

(४) रामः मार्गे गृहात् वधाय पादाभ्याम् चलति । अत्र करणकारकं अधिकं अस्ति ।

(५) रामः मार्गे गृहात् वधाय पादाभ्याम् लंकाम् चलति । अत्र कर्मकारकं अधिकं अस्ति । कर्ता सामान्यं कारकम्, चलति सामान्या क्रिया । एकस्य लोपे, द्वयोः लोपे, त्रयाणां लोपे वा क्रमभंगः न भवति ।

यज्ञश्रीः—साधु ! पण्डितः भव इति आशीर्वदामि ।

अब तक २३ पाठों में कर्ता, कर्म आदि कारक विविध क्रियाओं में दिखाये जा चुके हैं । अब उनका विभक्ति से क्या अन्तर है ? इसको इस पाठ में ऊपर दिखाया है ।

नए शब्द :—

इतः=इधर, अन्तर=भेद, सूदः=रसोइया, योगः=जोड़ ।

## अभ्यासः

१. सम्बन्ध को कारक क्यों नहीं मानते ? उदाहरण सहित स्पष्ट करो ।

२. संस्कृत में अनुवाद करो :—

रसोइया हाथ से भोजन पकाता है । क्या तुम आठवीं कक्षा में पढ़ते हो । हम विद्यालय जाना चाहते हैं । गुरुजी ने कक्षा में प्रवेश किया । कल हम नाटक देखने जायेंगे ।

३. इन शब्दों के अर्थ लिखो :—

मदीयम् । अपितु । जन्तुशाला । बकः । बधिरः । मिष्टान्नम् । इतरः । शाटिका । भानुः ।

४. सभी कारकों का प्रयोग करते हुए संस्कृत में एक वाक्य बनाओ ।

पञ्चविंशः पाठः

# सुभाषितानि

उद्यमप्रशंसा—

उद्यमेन हि सिध्यन्ति कार्याणि न मनोरथैः ।
न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः ॥१॥
विहाय पौरुषं यो हि दैवमेवालम्बते ।
प्रासादसिंहवत्तस्य मूर्ध्नि तिष्ठन्ति वायसाः ॥२॥
आलस्यं हि मनुष्याणां शरीरस्थो महान् रिपुः ।
नास्त्युद्यमसमो बन्धुः कृत्वा यं नावसीदति ॥३॥

क्षमाप्रशंसा—

क्षमा शस्त्रं करे यस्य दुर्जनः किं करिष्यति ।
अतृणे पतितो वह्निः स्वयमेवोपशाम्यति ॥४॥
नरस्याभरणं रूपं रूपस्याभरणं गुणः ।
गुणस्याभरणं ज्ञानं ज्ञानस्याभरणं क्षमा ॥५॥
क्षमा बलमशक्तानां शक्तानां भूषणं क्षमा ।
क्षमा वशीकृतिर्लोके क्षमया किं न सिध्यति ॥६॥

परोपकारप्रशंसा—

परोपकारः कर्तव्यः प्राणैरपि धनैरपि ।
परोपकारजं पुण्यं न स्यात्क्रतुशतैरपि ॥७॥

भवन्ति नम्रास्तरवः फलोद्गमैः ।
नवाम्बुभिर्भूरि विलम्बिनो घनाः ।।
अनुद्धताः सत्पुरुषाः समृद्धिभिः ।
स्वभाव एवैष परोपकारिणाम् ।।८।।
श्रोत्रं श्रुतेनैव न कुण्डलेन ।
दानेन पाणिर्न तु कंकणेन ।।
विभाति कायः खलु सज्जनानां ।
परोपकारेण न तु चन्दनेन ।।९।।

जीवितसाफल्यम्—

यस्य जीवन्ति धर्मेण पुत्रा मित्राणि बान्धवाः ।
सफलं जीवितं तस्य नात्मार्थे को हि जीवति ।।१०।।
चलं वित्तं चलं चित्तं चले जीवितयौवने ।
चलाचलमिदं सर्वं कीर्तिर्यस्य स जीवति ।।११।।
स जातो येन जातेन याति वंशः समुन्नतिम् ।
परिवर्तिनि संसारे मृतः को वा न जायते ।।१२।।

### अभ्यासः

१. सन्धिच्छेद करो–

नास्ति, नम्रास्तरवः, एवैष, पाणिर्न, नात्मार्थे, प्राणैरपि ।

२. पद-परिचय दो–

प्रविशन्ति, करिष्यति, क्षमया, मनोरथैः, उपशाम्यति, यस्य, गावः, कर्तव्यः ।

३. संस्कृत में अनुवाद करो–

उद्यम से ही कार्य सिद्ध होते हैं। आलस्य से मनुष्य दुःख पाता है। क्षमा बलवानों का शस्त्र है। परोपकार से जीवन सफल होता है। भाग्य में लिखा हुआ अवश्य होता है। हाथ की शोभा दान देने से होती है।

४. निम्नलिखित प्रश्नों का उत्तर संस्कृत में दो–

(क) कस्य जीवनं सफलं भवति ?

(ख) कर्णस्य शोभा केन भवति ?

(ग) शरीरस्थः कः महान् रिपुः ?

५. इस पाठ के कोई पाँच श्लोक कण्ठस्थ कर उनका सस्वर गान करो।

षड्विंशः पाठः

# दिलीपः नन्दिनी च

(स्वेच्छया कालकारकशब्दाः)

पुरा सूर्य वंशे दिलीपनामा नृपः आसीत् । तस्य एका चतुरा सुन्दरी सुदक्षिणा नाम्नी भार्या आसीत् । परं अनयोः दम्पत्योः पुत्रः न आसीत् ।

एकदा स दिलीपः पुत्रं **इच्छन्तीम्** भार्यां अभणत्—हे पत्नि ! त्वं मया सह वशिष्ठस्याश्रमं चल । तत्र सुतं **कामयमानौ** आवां तपाव गुरुं च सेवावहै । सा धवेन सह अचलत् ।

गुरुं उपगम्य तौ अवदताम्—हे गुरो ! आवयोः पुत्रः नास्ति । आवां किम् करवाव ? गुरुः अभणत्—कामधेनोः पुत्रीं नन्दिनीं सेवेथाम् । युवयोःपुत्रःअवश्यं भविष्यतीति । तौ नन्दिनीं असेवेताम् ।

सः दिलीपः भार्यया सह नन्दिनीं **सेवमानः** वनं अच-

लत् । स तत्र **धावतः** मृगान्, तड़ागे **तरतः** हंसान्, **कूजन्तौ** खगौ, **गुञ्जन्तौ** भ्रमरौ, **भ्रमन्तं** वटुं, कुटीरे **वसन्तं** साधुं च अपश्यत् । ईश्वरं **पूजयन्तीम्,** मंत्रान् **जपन्तीम्** पत्नीं **स्मरन्,** हृदये आचार्यं **नमन्,** नन्दिनीं **अनुगच्छन्** दिलीपः **कम्पमानान्** वृक्षान्, **वेपमानाः** वल्लरीः, **शोभमानं** वनं, **राजमानं** पर्वतं च अपश्यत् ।

एकदा नृपः अकस्मात् नन्दिनीं **धर्षयन्तं,** भूयः-भूयः **गर्जन्तं** सिंहं अपश्यत् । सः सिंहः मनुष्यवाण्या अभाषत — "हे दिलीप ! शिवः बहुकालं तपते मह्यं भोजनं प्रेषितवान् ।" दिलीपः अभणत्— भो मृगराज ! मम शरीरं **खादन्** त्वम् इमां नन्दिनीं मुञ्च । सिंहः अवदत्—हे नृप ! त्वम् मा त्रस्य, त्वम् **यजमानाय, शंकमानाय क्रुद्धमानाय** च गुरवे धेनूनां शतं यच्छ । सः अकथयत्—मा एवम्, मृत्योः अपकीर्तिः गुरु भवति । अतः अपकीर्तेः माम् रक्ष । सः अभाषत —तथास्तु । सः बुभुक्षिताय सिंहाय स्वं अयच्छत् । सिंहः

अदृश्यः अभवत् । तम् **सेवमानम्** कीर्त्या राजमानं दिलीपं तस्य सेवाधर्मेण सुप्रसन्ना नन्दिनी मनुष्यवाचा अकथयत् "वरं याचस्व" । **सः** अवदत् अहं प्रांगणे **खेलन्तं** पुत्रं याचे । सापि नन्दिनी तस्मै दिलीपाय अभीष्टं वरं अयच्छत् । अस्मात् एव वरप्रसादात् तस्य गृहे रघुनामा पुत्रः अजायत ।

'जाता हुआ' इस अर्थ में शतृ और शानच् प्रत्यय आते हैं, जिनके क्रमशः 'अत् और आन' शेष रहते हैं । 'शतृ" से तीनों लिंगों में 'चलन्', 'चलन्ती' और 'चलत्—इस प्रकार धातु से संज्ञाएं बन जाती हैं; शानच् प्रत्यय जोड़ने से 'वेपमानः', 'वेपमाना' तथा 'वेपमानम्'—इस प्रकार धातु से संज्ञाएं बन जाती हैं । शेष व्याकरण भाग में देखो ।

नए शब्द—बटुः=ब्रह्मचारी, धर्षयन्तम्=दबाते हुए ।

### अभ्यासः

१. हिन्दी में अनुवाद करो–

दिलीपः नन्दिनीं सेवमानः अचलत् । वयं आकाशे दीव्यन्तं चन्द्रं पश्यामः । आश्रमे बहवः पठन्तः बटवः तपन्तः मुनयश्च सन्ति । स राजमानं पर्वतं अपश्यत् । किं त्वं सरन्तं सर्पं न पश्यसि ?

२. नीचे लिखे वाक्यों को शुद्ध करके पुनः लिखो—

१. सः तत्र धावमानान् मृगान् अपश्यत् ।

२. वयं ईश्वरं भजन्तम् ब्राह्मणं पश्यामः ।

३. पुष्पाणामुपरि गुञ्जमानैः भ्रमरैः उपवनं शोभते ।

४. भूपः भूयः भूयः गर्जमानम् सिंहं अवदत् ।

५. दिलीपः भ्रमन्तीं नन्दिनीं अन्वगच्छत् ।

३. पद परिचय करो —

कामयमानौ, सेवमानः, अनुगच्छन् , वसन्तम्, यजमानाय, स्मरन्, पूजयन्तीम् ।

सप्तविंशः पाठः

# नृपसेवकवानरकथा

कस्यचित् नृपस्य नित्यं वानरः अतिभक्तिपरः अगंसेवकः अभवत् । एकदा राज्ञः सुप्तस्य वानरे व्यजनं गृहीत्वा वायुं विदधति राज्ञः वक्षःस्थलोपरि मक्षिका उपविष्टा । व्यजनेन मुहुः मुहुः निषिध्यमाना अपि पुनः पुनः तत्रैव उपविशति । ततः तेन स्वभावचपलेन मूर्खेण वानरेण क्रुद्धेन सता तीव्रं खंगं आदाय तस्याः उपरि प्रहारः विहितः । ततः मक्षिका उड्डीय गता परं तेन शितधारेण असिना राज्ञः वक्षः द्विधा जातं राजा मृतश्च ।

तस्मात् चिरायुः इच्छता जनेन मूर्खः अनुचरः न रक्षणीयः ।।

शब्दार्थ—व्यजनं=पंखा, मुहुः मुहुः=बार बार, खड्गः=तलवार मक्षिका=मक्खी, शितधारेण=तेजधार वाली, असिना=तलवार से, अनुचरः=नौकर ।

## अभ्यासः

(१) इस कथा से क्या शिक्षा मिलती है ?

(२) बन्दर ने मक्खी पर क्यों प्रहार किया ?

(३) पद परिचय दो—

कस्यचित्, अभवत्, विदधति, गृहीत्वा, गता, इच्छता ।

(४) संस्कृत में अनुवाद करो :–

वह पंखे से हवा करता है। तलवार के प्रहार से राजा मर गया। मूर्ख सेवक नहीं रखना चाहिए। बन्दर ने मक्खी पर प्रहार किया। बन्दर मूर्ख सेवक था। वह स्वभाव से चंचल है। किसी राजा का परम भक्त एक सेवक था।

(५) निम्नलिखित शब्दों को वाक्यों में प्रयोग करो—

एकदा, मुहुः, गृहीत्वा, पुनः, उपरि, आदाय।

अष्टाविंशः पाठः

# संवादे कर्तृकर्मवाक्यानि (१)

छात्राः—श्रीमन् ! अद्य वयं कर्तृवाच्यानि कर्म वाच्यानि च पठिष्यामः ।

गुरुः—साधु भवन्तः ! अद्य तानि एव पाठयिष्यामि ।

छात्राः—कर्तृवाच्यं किं भवति ?

गुरुः—कर्तृवाच्ये क्रिया सदा **'कर्तारम्'** अनुसरति । यदि कर्ता **प्रथमायां विभक्तौ** भवति, अथ च प्रथमपुरुषः भवति, तर्हि क्रियापि **प्रथमपुरुषे भवति**। यथा—**"गोपालः गृहं गच्छति ।"** अस्मिन् वाक्ये "गोपालः" कर्ता, स च

एकवचने अस्ति, प्रथमपुरुषीयः च अस्ति। "गच्छति" इति क्रिया अपि एकवचने प्रथमपुरुषे च वर्तते।

एवम् यदा क्रिया कर्तृशब्दम् अनुसरति तदा तत् 'कर्तृवाच्यं' भवति।

छात्राः—पठन्तः वयं नितरां तुष्यामः। गुरुवर ! कर्मवाच्यं किं भवति ?

गुरुः—कर्मवाच्ये कर्त्ता तृतीयायां विभक्तौ अथवा करणकारके भवति। "**कर्म**" च प्रथमायां भवति, '**क्रियाऽपि**' कर्म अनुसरति। अर्थात्—

(१) कर्म एकवचने — क्रिया एकवचने।
(२) कर्म द्विवचने — क्रिया द्विवचने।
(३) कर्म बहुवचने — क्रिया बहुवचने।

"कर्म" बहुवारं प्रथमपुरुषीयं भवति। यदा क्रिया कर्मशब्दं अनुसरति तदा तत् कर्मवाच्यं भवति।

छात्राः—श्रीमन् ! अस्ति अस्य कश्चित् नियमः।

गुरुः—नियमं बिना संस्कृतं न भवति। धातवः द्विविधाः भवन्ति; यथा—परस्मैपदीयाः धातवः, आत्मनेपदीयाः च।

परस्मैपदीयाः धातवः—गच्छति, चलति, मिलति, धावति इति।

आत्मनेपदीयाः धातवः—एधते, शोभते, राजते, वर्तते इति ।

कर्तृवाक्यानि सरलानि भवन्ति । यथा अद्यावधि सप्तविंश-पाठपर्यन्तं कर्तृवाक्यानि एव अपठत यूयम् । परं कर्तृवाक्यतः कर्मवाच्यस्य परिवर्तनाय एष नियमः—

लट्, लङ्. लोट् लृट् लकारेषु मूलधातुषु 'यत्' (य) प्रत्ययस्य संयोगात् ते धातवः आत्मनेपदीयाः धातवः इव भवन्ति । यथा—

पश्यति=दृश्यते, गच्छति=गम्यते, अधावत्=अधाव्यत, अकथयत्=अकथ्यत, पठतु=पठ्यताम्, स्मरतु=स्मर्यताम्, चलिष्यति=चलिष्यते, हसिष्यति=हसिष्यते इत्यादयः ।

(ख) लोट्लकारे प्रथमपुरुषे, मध्यमपुरुषे, उत्तम पुरुषे **'तव्य'** प्रत्ययस्य अपि प्रयोगः भवति, यथा—

पश्यतु=द्रष्टव्यम्, गच्छतु=गन्तव्यम्, धावतु=धावितव्यम्, मिलतु=मिलितव्यम्, खादतु=खादितव्यम्, चलतु=चलितव्यम् इति ।

छात्राः—अति सरलम् । वयं बोधामः प्रसीदामः च ।

कर्तृवाच्य और कर्मवाच्य को भली भाँति जानने के लिये 'कर्तृ कारक', 'कर्म कारक' तथा 'करण कारक को भली भाँति स्मरण कर लेना चाहिये । कर्तृवाच्य की

परस्मैपदी धातुएं यत् (य) प्रत्यय के योग से आत्मनेपदी हो जाती है। आत्मनेपदी धातु तो आत्मनेपदी ही रहती है।

## अभ्यासः

१. संस्कृत में कर्तृवाच्य और कर्मवाच्य में अलग २ अनुवाद करो—

तू अपना पाठ याद करता है। हम सब ने चित्र देखा। वे दो लगातार दौड़ते हैं। वे कन्याएं उद्यान में खेलती हैं। पशु वन में घूमते हैं और घास खाते हैं। साधु माँगते और वन में तपस्या करते हैं।

२. वाच्य परिवर्तन करो—

रामः पाठं अपठत्, तेन गुरुः नम्यते, अहं ग्रामं गच्छामि, निर्धनाय त्वं धनं यच्छ, नृपः तं दुष्टं अत्यजत्, बालकेन पाठः पठितव्यः, बालः ग्रामं गमिष्यति।

एकोनत्रिंशः पाठः

# संवादे कर्तृकर्मवाक्यानि [२]

गुरुः—अद्य अहं कर्तृवाच्यानि एव वदिष्यामि । भवन्तः सर्वे छात्राः नियमानुसारं कर्तृवाच्यानि कर्मवाच्ये परिणमत। कथयानि किम् ?

छात्राः—वयं सर्वे प्रस्तुताः स्म ।

गुरुः—रामः गच्छति ।

गोपालः—**रामेण गम्यते ।**

गुरुः—सिंहौ गर्जतः ।

गणेशः—**सिंहाभ्याम् गर्ज्यते ।**

गुरुः—छात्राः भ्रमन्ति ।

वल्लभनन्दनः—**छात्रैः भ्रम्यते ।** (लट्लकारस्य)

गुरुः—कमला अधावत ।

व्यासकुमारः—**कमलया अधाव्यत ।**

गुरुः—रमे अपठताम् ।

पार्थसारथिः—**रमाभ्याम् अपठ्यत ।**

गुरुः—ललनाः अस्मरन् ।

शक्तिकुमारः—:ललनाभिः अस्मर्यत। (लङ्लकारस्य)

गुरुः-सः व्रजिष्यति ।

विनोदः—तेन व्रजिष्यते ।

गुरुः—तौ गुञ्जिष्यतः ।

विद्याविनोदः—ताभ्याम् गुञ्जिष्यते ।

गुरुः—ते कूजिष्यन्ति ।

कार्तिकेयः—तैः कूजिष्यते (लृट्लकारस्य)

गुरुः—सा मिलतु ।

अनिरुद्धः—तया मिलितव्यम् ।

गुरुः—ते क्रीडताम् ।

जयन्तः—ताभ्याम् क्रीडितव्यम् ।

गुरुः—ताः लिखन्तु ।

अजनन्दनः—ताभिः लिखितव्यम् ।

(लोट्लकारस्य)

गुरुः—रामः गृहाणि गच्छति ।

गोपालः—रामेण गृहाणि गम्यन्ते ।

(कर्मणि बहुवचनम्)

गुरुः—बालौ पुष्पे पश्यतः ।

गणेशः—बालाभ्याम् पुष्पे दृश्येते ।

(कर्मणि द्विवचनम्)

गुरुः—छात्राः चित्रम् अवलोकयन्ति ।

बल्लभनन्दनः—छात्रैः **चित्रम् अवलोक्यते ।**

(कर्मणि एकवचनम्)

गुरुः—रमा धवम् स्मरति ।

श्रीविनोदः—**रमया धवः स्मर्यते ।**

गुरुः—ललने पितरौ स्मरतः ।

विद्याविनोदः—**ललनाभ्यां पितरौ स्मर्येते ।**

गुरुः—कन्याः लेखान् लिखन्ति ।

शक्तिकुमारः—**कन्याभिः लेखाः लिख्यन्ते ।**

गुरुः—मालाकारः वृक्षान् सिञ्चति ।

अजनन्दनः—**मालाकारेण वृक्षाः सिञ्च्यन्ते ।**

गुरुः—मित्रम् मित्रे मिलतः ।

जयन्तः—**मित्रेण मित्रे मिल्येते ।**

गुरुः—नार्यः वल्लरीः पश्यन्ति ।

अनिरुद्धः—**नारीभिः वल्लर्यः दृश्यन्ते ।**

(कर्मणि पुंलिंग–स्त्रीलिंग–नपुंसकशब्दाः)

### अभ्यासः

१. निम्नलिखित वाक्यों में वाच्य बताओ–

भार्यया धवः स्मर्यते । तेन लेखः लिख्यते । त्वं कुत्र गच्छसि । रामः अधावत् । सीता अस्मरत् । छात्रैः कन्दुकं क्रीड्यते ।

२. निम्नलिखित वाक्यों को शुद्ध करो–

सीतया पुस्तकं पठति । रामः वनं गम्यते । बालाभ्यां पुष्पं

दृश्येते । रमा धवं स्मर्यते । मित्रेण मित्रे मिलति । नारीभिः वल्लर्यः दृश्यते ।

निम्नलिखित वाक्यों का 'कर्तृवाच्य' और 'कर्मवाच्य' में अलग-अगल अनुवाद करो–

राम सीता को देखता है । सीता से राम याद किया जाता है । रावण ने भाई को स्मरण किया । मेघनाद से रावण देखा गया । नारियाँ व्रत रखती हैं । कान्याओं से अनुवाद लिखा गया । माली वृक्षों को सींचता है । वह फूलों की भी पालना करता है ।

## त्रिंशः पाठः

# सुन्दराः श्लोकाः

श्रूयतां धर्मसर्वस्वं श्रुत्वा चैवावधार्यताम् ।
आत्मनः प्रतिकूलानि परेषां न समाचरेत् ॥ १ ॥

अष्टादशपुराणेषु व्यासस्य वचनद्वयम् ।
परोपकारः पुण्याय पापाय परपीडनम् ॥ २ ॥

अकृत्यं नैव कर्तव्यं प्राणत्यागेऽपि संस्थिते ।
न च कृत्यं परित्याज्यमेष धर्मः सनातनः ॥ ३ ॥

धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः ।
धीर्विद्या सत्यमक्रोधः दशकं धर्मलक्षणम् ॥ ४ ॥

सत्यं ब्रूयात् प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम् ।
प्रियं च नानृतं ब्रूयादेष धर्मः सनातनः ॥ ५ ॥

प्रियवाक्यप्रदानेन सर्वे तुष्यन्ति जन्तवः ।
तस्मात्तदेव वक्तव्यं वचने का दरिद्रता ॥ ६ ॥

गुणाः सर्वत्र पूज्यन्ते पितृवंशो निरर्थकः ।
वासुदेवं नमस्यन्ति वसुदेवं न मानवाः ॥ ७ ॥

उदये सविता रक्तो रक्तश्चास्तसमये तथा ।

संपत्तौ च विपत्तौ च महतामेकरूपता ॥ ८ ॥

गंगा पापं शशी तापं दैन्यं कल्पतरुस्तथा ।
पापं तापं च दैन्यं च घ्नन्ति सन्तो महाशयाः ।६।

सन्तोषामृततृप्तानां यत्सुखं शान्तचेतसाम् ।
कुतस्तद्धनलुब्धानामितश्चेतश्च धावताम् ।। १० ।।

नास्ति विद्यासमं चक्षुः नास्ति सत्यसमं तपः ।
नास्ति रागसमं दुःखम् नास्ति त्यागसमं सुखम् ।११।

अभिवादनशीलस्य नित्यं वृद्धोपसेविनः ।
चत्वारि तस्य वर्धन्ते आयुः विद्या यशो बलम् ।१२।

शब्दार्थ—धृतिः=धैर्य, दमः=इन्द्रियों को वश में करना, अस्तेयं= चोरी न करना, शौचं=पवित्रता, धीः=बुद्धि, अनृतं=झूठ. वासुदेवः=कृष्ण, सविता=सूर्य, दैन्यं=दीनता ।

## अभ्यासः

१. सन्धिच्छेद करो—

नैव, ब्रूयान्न, दमोऽस्तेयं, धीर्विद्या, नानृतं, नास्ति, इतश्चेतश्च ।

२. पद-परिचय दो—

श्रुत्वा, समाचरेत्, कर्तव्यम्, तुष्यन्ति, घ्नन्ति, ब्रूयात्, तस्मात् ।

३. संस्कृत में अनुवाद करो—

परोकार से पुण्य प्राप्त होता है । सत्य-भाषण महान् गुण है । विद्या एक अमूल्य धन है । बड़ों की सेवा से यश मिलता है । क्रोध विनाश का कारण है । विपत्ति में दूसरों की सहायता करना धर्म है । सबसे प्रिय और सत्य वचन बोलो ।

४. निम्नलिखित प्रश्नों का संस्कृत में उत्तर दो–

(क) धर्मस्य किं लक्षणम् ?

(ख) कः सनातनः धर्मः ?

(ग) सपत्तौ विपत्तौ च कः एकरूपः ?

५. इस पाठ के किन्हीं ५ श्लोकों को अर्थ सहित कण्ठस्थ करके उन का सस्वर गान करो।

एकत्रिंशः पाठः

# मुनिमूषिककथा

अस्ति गौतमस्य महर्षेः तपोवने महातपा नाम मुनिः। तत्र तेन मुनिना काकमुखात् भ्रष्टः मूषिकशावकः दृष्टः। ततः दयालुना तेन मुनिना नीवारकणैः स संवर्धितः। ततः बिडालः तं मूषिकं खादितुं उपधावति। तं अवलोक्य मूषिकः तस्य मुनेः क्रोडे प्रविवेश। ततः मुनिना उक्तम्—'मूषिक ! त्वं मार्जारः भव।' ततः स बिडालः कुक्कुरं दृष्ट्वा पलायते। ततः मुनिना असौ कुक्कुरः कृतः। स च कुक्कुरः व्याघ्रात् बिभेति। ततः तेन मुनिना स व्याघ्रः कृतः। अथ तं व्याघ्रं मुनिः मूषिकः अयं इति पश्यति। अथ तं मुनिं दृष्ट्वा व्याघ्रं च सर्वे वदन्ति—'अनेन मुनिना अयं मूषिकः व्याघ्रतां नीतः।' एतत् श्रुत्वा स व्याघ्रः अचिन्तयत्—'यावत् अनेन मुनिना जीवितव्यम् तावत् इदं मम स्वरूपाख्यानं अकीर्तिकरं न पलायिष्यते' इति आलोच्य मूषिकः तं मुनिं हन्तुं गतः। ततः मुनिना तत् ज्ञात्वा "पुनर्मूषिको भव" इति उक्त्वा मूषकः एव कृतः। तथा च उक्तम्—

नीचः श्लाघ्यपदं प्राप्य स्वामिनं हन्तुमिच्छति।
मूषिको व्याघ्रतां प्राप्य मुनिं हन्तुं गतो यथा॥

शब्दार्थ—मूषिकशावकः=चूहे का बच्चा, नीवारकणः=धान्यकण क्रोड=गोद, बिडालः=बिल्ली, मार्जारः=बिल्ली, कुक्कुरः=कुत्ता, व्याघ्रः=शेर, श्लाघ्यपदं=उत्तम स्थान।

## अभ्यासः

१. इस कहानी से क्या शिक्षा मिलती है?

२. मुनि की मृत्यु से चूहे को क्या लाभ था?

३. वाक्य-परिवर्तन करो।

मुनिना मूषिकः दृष्टः। ततः मुनिना उक्तम्। तेन स व्याघ्रः कृतः। स व्याघ्रः अचिन्तयत्। मूषिकः तं मुनिं हन्तुं गतः।

संस्कृत में अनुवाद करो—

नीच पुरुष स्वामी को मारना चाहता है। मुनि ने व्याघ्र को फिर चूहा बना दिया। वह शेर से डरता है। किसी तपोवन में महातपा नाम का ऋषि रहता था। सज्जन मनुष्य कृतज्ञ होते हैं। दुष्ट मनुष्य कृतघ्न होते हैं।

द्वात्रिंशः पाठः

# संवादे संस्कृतनियमाः

## (स्वेच्छया कारक-काल-शब्दप्रयोगाः)

हिन्दी भाषा संस्कृत से भिन्न है। दोनों में क्या अन्तर है ? इसको इस संवाद में देखिए—

छात्राः—भो गुरुवर ! अद्य वयं प्रश्नान् पृच्छामः ।

अध्यापकः—साधु ! अहं प्रसन्नः अस्मि ।

श्रीविनोदः—"मैं नगर की शोभा का वर्णन करता हूँ" अस्य वाक्यस्य किम् संस्कृतम् ?

अध्यापकः—"अहं नगरस्य **शोभां वर्णयामि**" इति अस्य वाक्यस्य संस्कृतम् ।

श्रीविनोदः—"शोभा का" अत्र षष्ठी सम्बन्धः; कथम् त्वं द्वितीयाविभक्ति कर्मकारकं वा कथयसि ?

अध्यापकः—आम्, संस्कृतस्य वाग्धारा हिन्दीभाषायाः भिन्नः भवति ।

श्रीविनोदः—कथम् ?

अध्यापकः—हिन्दीभाषायां द्वे क्रिये अपि भवतः, यथा— "खा लूंगा" इत्यस्य **"खादिष्यामि"** इति एका क्रिया

भवति संस्कृते। "पी कर" इति वाक्यस्य "पीत्वा" इति क्रिया भवति।

ध्रुवश्रीः—सन्ति अन्ये अपि नियमाः संस्कृतस्य।

अध्यापकः—सन्ति। तान् नियमान् कथयामि। सावधानाः यूयं श्रुणुत।

यथा—

(१) कः अपि शब्दः विभक्तिरहितः न भवति। विभक्ति-युक्ताः एव शब्दाः संस्कृते भवन्ति; यथा—देवः, शत्रून्, भार्यया, हस्तयोः इत्यादयः।

(२) संस्कृते लिंगम् प्रत्यानुसारतः भवति, हिन्दी भाषायां अर्थानुसारतः लिंगं भवति, यथा—हिन्दीभाषायां 'दोस्त' इति पुल्लिगे भवति, तस्य संस्कृतम् "मित्रम्" नपुंसकलिंगे भवति। एवं अन्यत्र अपि।

(३) हिन्दी भाषायां एकस्मिन् एव शब्दे द्वे विभक्ति अपि भवतः, यथा—"घर में से" "यज्ञ में से" इत्यादि; परं संस्कृते एका विभक्तिः भवति; यथा—"गृहे" "यज्ञात्" इत्यादि।

पुनः सः एव अध्यापकः—एवं संस्कृतस्य नियमैः संस्कृतं सरलं भवति।

## अभ्यासः

१. संस्कृत में अनुवाद करो—

मैं सोमवार घर गया था, वहाँ माता और माता उपस्थित थे। मैंने उन्हें प्रणाम किया। उन्होंने मुझे स्वस्ति कहा। बहिन भोजन पका रही थी। छोटे बच्चे भोजन खा रहे थे। मैं घर जाकर बहुत प्रसन्न हो रहा हूँ।

२. इन शब्दों के लिंग बताओ—

तरणिः। बुद्धिः। कविः। अलिः। साधुः। धेनुः। वधूः। मित्रेषु। भ्रातरम्। पुस्तकानि। हस्ताभ्याम्। पादाभ्याम्।

३. इन शब्दों में वचन बताओ—

कालः। भक्ती। बुद्ध्याः। बालाः। कपयः। रामः। नदी। नदीः। अपठत्। पठत। गच्छताम्। गच्छतम्। पठामि। पठानि।

त्रयस्त्रिंशः पाठः

# पत्रम्

देहलीनगरम्,

प्रथमा श्रावणस्य, २०१७ संवत्सरः ।

प्रिय नरेन्द्र !

तव पत्रं अलभे । विस्तृतं समाचारं च अपठम् । त्वं स्वैः सतीर्थ्यैः सह पर्वतप्रदेशान् भ्रमिष्यसि, इति पठित्वा अतुष्यम् । तव गुरुः अपि छात्रैः सह गमिष्यति, इत्यनेन समाचारेणापि आमोदे । सर्वे छात्राः यथास्थानं यथासमयं च सन्ध्यां आचरिष्यन्ति, यक्ष्यन्ते च इति आशासे । पुरा अहं अपि छात्रजीवने बम्बईनगरं अगच्छम्, कलकत्तापुरीं च अपश्यम् । स्वं अध्यापकं यात्रावृत्तान्तं अपृच्छम्, इतिहास स्थलानि च अवागच्छम् । त्वम् अपि इत्थं आचरिष्यसि इति कल्पयामि । पर्वतस्य प्रदेशाः रमणीयाः भवन्ति, सन्धिकालः पर्वतेषु चित्तं भृशं आकर्षति, वनानां पंक्तिः अपि मनः मोदयति । त्वं स्वपाठ्यग्रन्थान् अपि नय । पर्वतानां शिखरेषु पठनं पाठनं च रोचते ।

यावन्ति रूप्यकाणि त्वं वाञ्छसि, तानि रूप्यकाणि तु

प्रेषयामि ; परं रूप्यकाणां शतं अधिकं ददामिं, येन तव यात्रा सुखदा ज्ञानप्रदा, स्मृतिबहुला च भवतु ।

अत्र सर्वथा कुशलं वर्तते ।

कल्याणकामः——

देवराजः

इस पाठ में सभी कारकों और विभक्तियों का सभी शब्दों के लिए प्रयोग किया है। काल नियम भी इसमें बिना किसी बन्धन के है, अतः यह स्वतन्त्र संस्कृत-संदर्भ का नमूना है।

## अभ्यासः

१. संस्कृत में अनुवाद करो–
मैं यात्रा के लिए जा रहा हूँ। मेरे साथ मेरा एक मित्र भी है। लोग शिमला की बड़ी प्रशंसा करते हैं। मसूरी के गुण भी हम स्मरण करते हैं। इस वर्ष बम्बई नामक महा नगरी को देखने को मन चाहता है। इस यात्रा के लिए पचास रुपये चाहिए।

२. निम्नलिखित शब्दों को वाक्यों में प्रयुक्त करो–
पत्रम्, मित्रम्, सतीर्थ्यान्, तुष्यसि, यात्रावृत्तान्तेन, माम् ।

३. रिक्त स्थानों की पूर्ति करो–
............अवकाशः......... । .........नगरस्य......... ।
.........भ्रातुः............ । ............प्रदेशः............ ।
तडागेषु··· ।

# व्याकरण-विभागः

## (१) कारक और विभक्ति

कारक चिह्न और विभक्ति चिह्न जुड़ने से कोई शब्द संस्कृत में बदल सकता है, अन्यथा वह शब्द हिन्दी, बंगला, गुजराती, मराठी या पंजाबी में बना रहता है। यथा––

| हिन्दी | संस्कृतम् |
|---|---|
| राम | रामः |
| नदियाँ | नद्यः |
| सीता को | सीताम् इत्यादयः। |

अतः अनुवाद करते समय यह ध्यान रखना चाहिए कि कोई शब्द ऐसा न रह जाय जिसे कारक अथवा विभक्ति का चिह्न न लगा हो। सब शब्दों को विभक्ति चिह्न अवश्य लगाना चाहिए।

हिन्दी का मुहावरा (बोलचाल) अलग है और संस्कृत का मुहावरा अलग है; अतः हिन्दी की विभक्तियों को संस्कृत विभक्तियों के समान नहीं समझना चाहिये। यथा–

| हिन्दी | संस्कृतम् |
|---|---|
| रात का वर्णन करता हूँ। | रात्रिम् वर्णयामि। |
| ब्राह्मण को देता हूँ। | ब्राह्मणाय ददामि। |
| घर में जाकर | गृहं गत्वा इत्यादयः |

## कारकों और विभक्तियों का प्रयोग

कारक का अर्थ है–करने वाला अर्थात् क्रिया के साथ सम्बन्ध रखने वाला। कोई क्रिया तब तक हो ही नहीं सकती जबतक उसका कोई कारक न हो। अतः वाक्य में संज्ञा और सर्वनाम का क्रिया के साथ जो सम्बन्ध होता है उसे कारक कहते हैं और उनके साथ प्रयुक्त होने वाले चिह्नों को विभक्ति कहते हैं।

संस्कृत में कारक छः हैं और विभक्तियाँ आठ हैं। अब हम इनका अर्थ और प्रयोग देते हैं––

**कर्ता कारक**—जो क्रिया करता है, उसे कर्ता कारक कहते हैं और इसे बताने के लिए प्रथमा विभक्ति का प्रयोग होता है। जैसे––"रामः पठति" में राम पढ़ने की क्रिया करता है, अतः वह कर्ता है।

अधोलिखित अर्थों में प्रथमा विभक्ति आती है–

१. कर्तृवाच्य के कर्ता में–रामः पठति, देवः गच्छति।

२. कर्मवाच्य के कर्म में–बालकैः पाठः पठ्यते।

३. सम्बोधन में–हे राम, भो नराः।

**कर्म कारक**—कर्ता से की हुई क्रिया का फल जिस पर पड़े उसे कर्म कहते हैं। इसमें द्वितीया विभक्ति का प्रयोग होता है। जैसे–"रामः अन्नं खादति" इसमें खादति क्रिया का फल अन्न पर पड़ रहा है, अतः अन्नं कर्म है।

अधोलिखित अर्थों में कर्म कारक प्रयुक्त होता है––

१, कर्तृवाच्य के कर्म में–रामः मृगं पश्यति।

२. गत्यर्थक धातुओं में–कृष्णः ग्रामं गच्छति याति वा।

३. ऋते, अन्तरेण, विना के साथ–विद्यां अन्तरेण, ऋते, विना वा न सुखम् ।

४. अभितः, परितः, सर्वतः के साथ–गुरुं परितः, अभितः, सर्वतः वा शिष्याः तिष्ठन्ति ।

५. प्रति के साथ–दीनं प्रति दयां कुरु ।

**करण कारक**––करण का अर्थ है––साधन । क्रिया की सिद्धि में जो साधन होता हैं अर्थात् जो क्रिया की सिद्धि में सहायता देता है उसे करण कहते हैं । इसे बताने के लिए तृतीया विभक्ति का प्रयोग होता है । जैसे––सः हस्तेन लिखति । इसमें लिखने का साधन हाथ है, अतः इसमें 'हस्तेन' करण है ।

अधोलिखित अर्थों में करण कारक प्रयुक्त होता है–

१. करण (साधन) में–सः मुखेन खादति ।

२. कर्मवाच्य के कर्ता में–रामेण सत्यं कथ्यते ।

३. सह, सार्धं आदि के साथ–मित्रेण सह सार्धं वा गच्छति ।

४. अलम् (समाप्ति) के अर्थ में–अलं कलहेन ।

५. विना और हीन के साथ–धर्मेण विना न सुखम् । धर्मेण हीनाः पशुभिः समानाः ।

६. अंग-विकार में–नेत्रेण काणः, पादेन खञ्जः ।

**सम्प्रदान कारक**––जिसे कुछ दिया जावे, उसे सम्प्रदान कहते हैं । इसमें चतुर्थी विभक्ति प्रयुक्त होती है । जैसे :––"सः दरिद्राय धनं ददाति "इसमें दरिद्र को धन दिया जाता है, अतः इसमें "दरिद्राय" सम्प्रदान कारक है । अधोलिखित अर्थों में सम्प्रदान कारक प्रयुक्त होता है–

१. जिसे कुछ दिया जावे–गुरुः शिष्याय विद्यां ददाति ।

२. रुच्यर्थक धातुओं के साथ–रामाय पठनं रोचते ।

३. क्रुध्, द्रुह्, ईर्ष्य् धातुओं के साथ–सः दुष्टाय क्रुध्यति द्रुह्यति, ईर्ष्यति ।

४. नमः, स्वस्ति, स्वाहा के योग में–गुरवे नमः, नृपाय स्वस्ति, इन्द्राय स्वाहा ।

५. अलं (समर्थ होना) के योग में–भीमः कौरवेभ्यः अलम् ।

**अपादान कारक**—जब कोई किसी से अलग होता है तो जिससे अलग होता है, उसे अपादान कहते हैं । अपादान में पञ्चमी विभक्ति आती है । जैसे—"वृक्षात् पत्राणि पतन्ति । इसमें वृक्ष से पत्ते अलग होते हैं, अतः "वृक्षात्" में अपादान कारक है । अधो लिखित अर्थों में अपादान कारक प्रयुक्त होता है–

१. अलग होने में–सः अश्वात् पतति ।

२. भय, रक्षा और निवारण अर्थ वाली धातुओं के साथ सिंहात् त्रस्यति, चौरात् रक्षति, पापात् निवारयति ।

३. पैदा होने के अर्थ में—पंकात् कमलं जायते ।

४. विना और ऋते के योग में—ज्ञानात् विना ऋते वा न मुक्तिः ।

५. प्रभृति के योग में—शैशवात् प्रभृति ।

**अधिकरण कारक**—जिसमें या जिस पर कर्ता अपनी क्रिया करता है उसे आधार कहते हैं और आधार में अधिकरण कारक होता है । इसमें सप्तमी विभक्ति आती है । जैसे—"सः आसने तिष्ठति" इसमें बैठने का आधार 'आसने' है, अतः 'आसने' अधि-

करण कारक में है। अधोलिखित अर्थों में अधिकरण कारक प्रयुक्त होता है—

१. किसी वस्तु के आधार बताने में—भूमौ शेते।

२. निर्धारण में—नरेषु द्विजः श्रेष्ठः।

**षष्ठी विभक्ति**—इसमें संज्ञा व सर्वनाम का क्रिया के साथ सम्बन्ध नहीं होता, अपितु संज्ञाओं या सर्वनामों का परस्पर सम्बन्ध होता है अतः इसे संस्कृत में कारक नहीं मानते। संज्ञा व सर्वनाम में परस्पर सम्बन्ध बताने वाली विभक्ति को षष्ठी विभक्ति कहते कहते हैं। जैसे—"रामस्य भ्राता गच्छति" इसमें राम का सम्बन्ध भ्राता से है, गच्छति से नहीं। अधोलिखित अर्थों में षष्ठी विभक्ति प्रयुक्त होती है—

१. सम्बन्ध में—रामस्य पुस्तकं अस्ति।

२. 'हेतु' शब्द के प्रयोग में—अन्नस्य हेतोः वसति।

३. दूर या समीप अर्थ वाले शब्दों में—ग्रामस्य दूरं समीपे वा गृहम् अस्ति।

४. निर्धारण में—नराणां द्विजः श्रेष्ठः।

### अभ्यासः

१. कारक का क्या लक्षण है? सस्कृत में कितने कारक होते हैं?

३. सम्प्रदान और अपादान कारकों का अर्थ और प्रयोग स्पष्ट करो।

३. अधोलिखित वाक्यों में कारक और विभक्तियाँ बताओ—अहं पुस्तकं पठामि। स नेत्राभ्यां पश्यति। इदं तव वस्त्रम्। गुरुः शिष्याय क्रुध्यति। बालः मित्रेण सह गच्छति। मुनिः भूमौ शेते।

## (२) संज्ञाओं तथा सर्वनामों के रूप--

**तीन लिंग**--संस्कृत शब्द तीन लिंगों में विभक्त हैं। कुछ शब्द पुल्लिग, कुछ शब्द स्त्रीलिंग और कुछ नपुंसक लिंग में प्रयुक्त होते हैं। लिंग के अनुसार शब्दों के रूप भी बदल जाते हैं अतः शब्दों के लिंगों पर अवश्य ध्यान देना चाहिए।

**तीन वचन**--संस्कृत में तीन वचन होते हैं। एक को बताने के के लिए एक वचन, दो को बताने के लिए द्विवचन और दो से अधिक के लिए बहुवचन का प्रयोग किया जाता है।

अतः हम तीनों लिंगों और तीनों वचनों में शब्दों के रूप देते हैं। स्मरणीय शब्द-रूप निम्नलिखित हैं—

(क) अकारान्त—रामः, नरः घटः, जलं, फलं इत्यादि।

(ख) आकारान्त--लता, रमा, कन्या आदि।

(ग) इकारान्त--कविः, नृपतिः, पतिः, वारि।

(घ) ईकारान्त—नदी, भगिनी, श्रीः, सुधीः।

(ङ) उकारान्त--भानुः, साधुः, धेनुः, मधु।

(च) ऊकारान्त--वधू, सुभ्रूः।

(छ) ऋकारान्त—दातृ, पितृ, मातृ, भ्रातृ।

इनमें से कुछ शब्दों के रूप हम छठी श्रेणी में पढ़ चुके हैं, अतः नए शब्दों के रूप ही नीचे दिए जाते हैं--

**संज्ञाओं की विभक्तियों के पीछे लगने वाले प्रत्यय--**

| विभक्ति | एक वचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्रथमा | स् | औ | अस् |
| द्वितीया | अम् | औ | अस् |
| तृतीया | आ | भ्याम् | भिस् |

| | | | |
|---|---|---|---|
| चतुर्थी | ए | भ्याम् | भ्यस् |
| पंचमी | अस् | भ्याम् | भ्यस् |
| षष्ठी | अस् | ओस् | नाम् |
| सप्तमी | इ | ओस् | सु |

पतिः (स्वामी) पुंल्लिग

| विभक्ति | एकवचन | द्विवचन | वहुवचन |
|---|---|---|---|
| प्रथमा | पतिः | पती | पतयः । |
| द्वितीया | पतिम् | पती | पतीन् । |
| तृतीया | पत्या | पतिभ्याम् | पतिभिः । |
| चतुर्थी | पत्ये | पतिभ्याम् | पतिभ्यः। |
| पंचमी | पत्युः | पतिभ्याम् | पतिभ्यः । |
| षष्ठी | पत्युः | पत्योः | पतीनाम् । |
| सप्तमी | पत्यौ | पत्योः | पतिषु । |
| सम्बोधन | हे पते | हे पती | हे पतयः । |

नृपतिः (राजा) पुंल्लिग

| | | | |
|---|---|---|---|
| प्रथमा | नृपतिः | नृपती | नृपतयः । |
| द्वितीया | नृपतिम् | नृपती | नृपतीन् । |
| तृतीया | नृपतिना | नृपतिभ्याम् | नृपतिभिः। |
| चतुर्थी | नृपतये | नृपतिभ्याम् | नृपतिभ्यः । |
| पंचमी | नृपतेः | नृपतिभ्याम् | नृपतिभ्यः । |
| षष्ठी | नृपतेः | नृपत्योः | नृपतीनाम् । |
| सप्तमी | नृपतौ | नृपत्योः | नृपतिषु । |
| सम्बोधन | हे नृपते ! | हे नृपती | हे नृपतयः । |

नोट—भूपतिः, धनपतिः, बृहस्पतिः, वाचस्पतिः तथा गृहपतिः के अतिरिक्त कविः, हरिः, मुनिः, ऋषिः, रविः आदि इकारान्त पुंल्लिग शब्दों के रूप भी नृपतिः के समान ही होते हैं।

### सुधीः (बुद्धिमान्) पुंल्लिग

| | | | |
|---|---|---|---|
| प्रथमा | सुधीः | सुधियौ | सुधियः । |
| द्वितीया | सुधियम् | सुधियौ | सुधियः । |
| तृतीया | सुधिया | सुधीभ्याम् | सुधीभिः । |
| चतुर्थी | सुधिये | सुधीभ्याम् | सुधीभ्यः । |
| पंचमी | सुधियः | सुधीभ्याम् | सुधीभ्यः । |
| षष्ठी | सुधियः | सुधियोः | सुधियाम् । |
| सप्तमी | सुधियि | सुधियोः | सुधीषु । |
| सम्बोधन | हे सुधीः | सुधियौ | सुधियः । |

ऐसे ही शुद्धधीः, सुश्रीः आदि के रूप जानो।

### भानुः (सूर्य) पुंल्लिग

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्रथमा | भानुः | भानू | भानवः । |
| द्वितीया | भानुम् | भानू | भानून् । |
| तृतीया | भानुना | भानुभ्याम् | भानुभिः । |
| चतुर्थी | भानवे | भानुभ्याम् | भानुभ्यः । |
| पंचमी | भानोः | भानुभ्याम् | भानुभ्यः । |
| षष्ठी | भानोः | भान्वोः | भानूनाम् । |
| सप्तमी | भानौ | भान्वोः | भानुषु । |
| सम्बोधन | हे भानो ! | हे भानू | हे भानवः । |

इसी प्रकार वायुः शिशुः, रिपुः, साधुः, विष्णुः, सिन्धुः विधुः, पशुः, प्रभुः, तरुः और गुरुः आदि शब्दों के रूप होते हैं ।

### दातृ (देने वाला) पुल्लिंग

| | | | |
|---|---|---|---|
| प्रथमा | दाता | दातारौ | दातारः । |
| द्वितीया | दातारम् | दातारौ | दातॄन् । |
| तृतीया | दात्रा | दातृभ्याम् | दातृभिः । |
| चतुर्थी | दात्रे | दातृभ्याम् | दातृभ्यः । |
| पंचमी | दातुः | दातृभ्याम् | दातृभ्यः । |
| षष्ठी | दातुः | दात्रोः | दातॄणाम् । |
| सप्तमी | दातरि | दात्रोः | दातृषु । |
| सम्बोधन | हे दातः ! | हे दातारौ | हे दातारः । |

इसी प्रकार धातृ, (विधाता), कर्तृ, वक्तृ, (वक्ता) होतृ, (हवन करने वाला) और भर्तृ (स्वामी) के रूप होते हैं ।

### पितृ (पिता) पुल्लिंग

| | | | |
|---|---|---|---|
| प्रथमा | पिता | पितरौ | पितरः । |
| द्वितीया | पितरम् | पितरौ | पितॄन् । |

नोट :—शेष दातृ की तरह । मातृ और भ्रातृ के रूप भी पितृ की तरह होंगे । मातृ शब्द की द्वितीया के बहुवचन में मातॄः रूप बनता है ।

### श्रीः (लक्ष्मी) स्त्रीलिंग

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्रथमा | श्रीः | श्रियौ | श्रियः । |
| द्वितीया | श्रियम् | श्रियौ | श्रियः । |

